# Sahridayanandam

Cantos 1 to 6.

with a commentary

by

**M. C. SATAKOPACHARIAR,**

*Sanskrit Pandit, Srirangam.*



SRIRANGAM

SRI VANI VILAS PRESS.

1907.

॥ श्रीः ॥

# ॥ सहृदयानन्दम् ॥

## प्रथमः सर्गः ।

यदिन्द्रियाणां विषयत्वमेति
लोकेषु यत्तत्त्वमतीन्द्रियं च ।
कृत्स्नस्य तस्य प्रतिपत्तिहेतु-
र्वाग्देवता सा मयि सन्निधत्ताम् ॥ १ ॥

इह खलु सकलकविकुलसार्वभौम श्रीमान् श्रीकृष्णानन्दसूरिः "काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयस्साधनतां, "काव्यालापांश्च वर्जयेत्" इत्यस्य निषेधशास्त्रस्य असत्काव्यविषयतां च पश्यन्, श्रीनलचरित्रपवित्रित सहृदयानन्दाख्यं महाकाव्य चिकीर्षुः, चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात्, "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ।" इति आशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् च, तत्र आदौ ऐहिकामुष्मिकफलावाप्तिहेतुभूतायाः भगवत्याः वाग्देव्याः प्रार्थनारूपं मङ्गलं उपनिबध्नाति ॥

**यत् इति** ॥ यत् तत्त्वं, लोकेषु भुवनेषु, इन्द्रियाणां वाक्चक्षुःश्रोत्रादीनां पञ्चानां हृषीकाणां, विषयत्वं गोचरत्व, एति गच्छति ; यत्, तत्त्व पदार्थजात, अतिक्रान्तं इन्द्रियाणि अतीन्द्रियं इन्द्रियागोचरं च, (वर्तते) ; कृत्स्नस्य समस्तस्य,

तस्य तत्त्वस्य प्रत्यक्षस्य लौकिकव्यवहारस्य, वेदशास्त्रादिगम्यस्य अप्रत्यक्षस्य स्वर्गमोक्षादिरूपस्य व्यवहारस्य च इत्यर्थः, प्रतिपत्तिहेतुः प्रतिपत्तेः ज्ञानस्य अवगमनस्य इति यावत् हेतुः कारणभूता, वाचां देवता वाग्देवता वागधिष्ठातृदेवता सरस्वतीदेवी इत्यर्थः, मयि एतन्महाकाव्यनिर्मिमित्सौ मयि, सान्निध्यं सन्निहिता भवतु ॥ अस्मिन् सर्गे प्रायेण वृत्तं **उपजातिः** ॥ तल्लक्षणं तु—" 'स्यादिन्द्रवज्रा **ततजास्ततो गौ**।' 'उपेन्द्रवज्रा **जतजास्ततो गौ**।' 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥ " इति ॥ १ ॥

**दैत्येन्द्रमेकं करजैरनेकै-**
**र्विदारयन्व्रीडमिव प्रपन्नः ।**
**स्वच्छेषु रत्नेष्वनुबिम्बदम्भात्**
**कुर्वन्ननेकं जयतान्नृसिंहः ॥ २ ॥**

संप्रति कविः स्वप्रबन्धप्रत्यूहविदलनार्थं विदलितहिरण्यकशिपुवक्षसं भगवन्तं श्रीनृसिंहं अभिष्टौति ॥

**दैत्येति** ॥ एकं एकाकिनं सहायान्तररहितं इत्यर्थः, दैत्यानां इन्द्रः तं दैत्येन्द्रं हिरण्यकशिप्वाख्यं असुरपतिं, अनेकैः बहुभिः दशभिः इत्यर्थः, करे जायन्ते इति तैः करजैः कररुहैः नखैः इति यावत् ("पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।" इति अमरः), विदारयन् विदलयन् सन्, व्रीडं लज्जां ('व्रीडशब्दः पुँल्लिङ्गेऽपि वर्तते' इति अमरटीकाकारः), प्रपन्नः प्राप्तः इव, स्वच्छेषु निर्मलेषु, रत्नेषु स्वाभरणस्थमणिषु, ('रक्तेषु' इति पाठे असुरविदारणसमये तद्वक्षसः निस्सृतेषु स्वीयाङ्गुल्यग्रलग्नेषु रुधिरेषु इत्यर्थः), अनुबिम्बं हिरण्यकशिपोः प्रतिबिम्बं तस्य दम्भात् व्याजात्, एकः न भवति इति तं अनेकं बहुरूपं इत्यर्थः, कुर्वन् विदधत्, नरः च असौ सिंहः च नृसिंहः नरकेसरी, जयतात् सर्वोत्कर्षेण वर्तताम् ॥ २ ॥

**दोषोदये तोषमपि प्रपन्नः**
**खलस्तुलामेति न कौशिकस्य ।**
**पूर्वस्य सर्वत्र विपक्षतास्ति**
**निसर्गतोऽन्यस्य सपक्षतैव ॥ ३ ॥**

अथ कविः श्लोकद्वयेन दोषैकदृशः खलान् विनिन्दति ॥

**दोषोदये इति** ॥ दोषोदये दोषाणां स्खलितानां उदये आविर्भावे विषये (दोषायाः रजन्याः उदये आगमे इति कौशिकपक्षे), तोषं सन्तोषं, प्रपन्नः अपि गतः अपि, खलः दुर्जनः, कौशिकस्य उलूकस्य ("उलूकस्तु वायसारातिपेचकौ । दिवान्धः कौशिको घूकः" इति अमरः), तुलां उपमां साम्यं इति यावत्, न एति न प्राप्नोति । तत्र हेतुं आह पूर्वस्य आद्यस्य खलस्य, सर्वत्र सर्वेष्वपि जनेषु, निसर्गतः स्वभावात् एव, विपक्षता विरुद्धः पक्षः अस्य इति विपक्षः तस्य भावः विपक्षता शत्रुत्वं द्वेषः इति यावत् (विगतौ पक्षौ गरुतौ यस्य तस्य भावः विपक्षता पक्षविहीनत्वं इति च गम्यते), अस्ति वर्तते । अन्यस्य अपरस्य कौशिकस्य तु सर्वत्र सर्वदा इत्यर्थः, निसर्गतः स्वभावतः एव, पक्षाभ्यां सह वर्तते इति सपक्षः तस्य भावः सपक्षता एव पक्षविशिष्टत्वं एव (उलूकस्य पक्षिजातित्वात् इत्यर्थः) (पक्षपातित्व इति च गम्यते). अस्ति इति शेषः । दोषाविर्भावे सन्तोषभजनेन यद्यपि दुर्जनकौशिकयोः साम्यं अस्ति, तथापि निसर्गतः तयोः विपक्षतासपक्षताभेददर्शनात् दुर्जनादपि उलूकः एव श्रेयान् इति तात्पर्यम् ॥ ३ ॥

**धात्रा खलानां च सतां च किञ्चि-**
**द्विवेचनार्थं क्रियते न चिह्नम् ।**
**परस्य दोषेषु गुणेषु चामी**
**प्रमोदलाभात्प्रकटीभवन्ति ॥ ४ ॥**

**धात्रा इति** ॥ खलानां च दुर्जनानां च, सतां च सज्जनानां च, विवेचनार्थं भेदज्ञानार्थं, धात्रा ब्रह्मणा, किञ्चित् किमपि, चिह्नं लक्ष्म, न क्रियते न विधीयते । (तथापि), अमी एते दुर्जनाः सज्जनाश्च, (क्रमात्) परस्य अन्यस्य, दोषेषु स्खलितेषु, गुणेषु च उत्कर्षेषु च, प्रमोदलाभात् प्रमोदस्य सन्तोषातिशयस्य लाभात् उपलम्भात् हेतोः. दुर्जनानां परस्य दोषेषु प्रमोदलाभात् सज्जनानां परस्य गुणेषु प्रमोदलाभात् च इत्यर्थः, प्रकटीभवन्ति प्रकाशीभवन्ति व्यक्तीभवन्ति इति यावत् ॥ ४ ॥

रत्नस्य काव्यस्य च नूतनस्य
तुल्यः स्वभावः प्रतिभासते मे ।
मृजाभिरेते निपुणैः कृताभिः
समश्नुवाते हि गुणान्तराणि ॥ ५ ॥

अनेन श्लोकेन कविः नवीनं काव्यं नूतनेन रत्नेन उपमिमीते ॥

**रत्नस्य इति** ॥ नूतनस्य अभिनवस्य, रत्नस्य मणेः, नूतनस्य नवीनस्य, काव्यस्य च प्रबन्धस्य च, स्वभावः अवस्था स्थितिः इति यावत्, तुल्यः सदृशः, (अस्ति); (इति), मे मह्यं, प्रतिभासते प्रतिभाति । हि यस्मात्, एते रत्न काव्यं च इति इमे द्वे अपि, निपुणैः अतिसमर्थैः परीक्षकैः (रत्नपरीक्षकैः काव्यपरीक्षकैश्च इत्यर्थः), कृताभिः विहिताभिः, मृजाभिः परिशोधनैः, अन्ये गुणाः गुणान्तराणि गुणविशेषाः तानि विशिष्टगुणान् इति यावत्, समश्नुवाते संप्राप्नुतः ॥ ५ ॥

ता एव नूनं सफलोदयाः स्यु-
र्मुक्ताः प्रसन्नाः कविसूक्तयश्च ।
गुणोपपत्त्या कमनीयगुम्फाः
कण्ठे सतां याः पदमाप्नुवन्ति ॥ ६ ॥

अस्मिन् पद्ये कविः सत्कविसूक्तिं मुक्ताहारसमां अभिधत्ते ॥

**ताः इति** ॥ याः मुक्ताः कविसूक्तयश्च, गुणोपपत्त्या गुणानां सूत्राणां तन्तूनां इति यावत् उपपत्तिः अनुषङ्गः तया (इति मुक्तापक्षे) गुणाः माधुर्यौजः-प्रसादादयः काव्यगुणाः तेषां उपपत्त्या उपयोगेन (इति कविसूक्तिपक्षे), कमनीयः मनोज्ञः गुम्फः ग्रथनं यासां ताः (इति मुक्तापक्षे) कमनीयः मनोहरः गुम्फः शब्दार्थयोः सम्यक् रचनं यासां ताः (इति सूक्तिपक्षे) ("वाक्ये शब्दार्थयोः सम्यक् रचना गुम्फना मता ।" इति लक्षणात्) तथाविधाः सत्यः, सतां साधूनां, कण्ठे ग्रीवायां (इति मुक्तापक्षे) कण्ठाभ्यन्तरे हृदयाभ्यन्तरे इति यावत् (इति सूक्तिपक्षे), पदं स्थितिं, आप्नुवन्ति लभन्ते ; ताः तादृश्यः, प्रसन्नाः स्वच्छाः विशदाः इति यावत्, मुक्ताः एव मौक्तिकानि एव, कवीनां काव्यकर्तॄणां सूक्तयः प्रबन्धाश्चैव,

नूनं ध्रुवं, सफलः सप्रयोजनः उदयः उत्पत्तिः यासां ताः तथाविधाः, स्युः भवेयुः ॥ यथा सूत्रेषु हाररूपेण सम्यक् गुम्फितानां मौक्तिकानां साधुभिः निजकण्ठे धारणेन साफल्यं भवति ; तथैव माधुर्यादिगुणयुतत्वेन सम्यक् रचितानां अतः एव सद्भिः सुपठितानां मनसि धृतानां च सूक्तीनामेव निर्माण सफलं भवेत् इति तात्पर्यम् ॥ ६ ॥

**अत्रेतिवृत्ते रचिते प्रबन्धे**
**क्रुद्धो मुधा मास्तु कविः पुराणः ।**
**न स्पर्धया व्योम्नि सहस्रधाम्नः**
**खद्योतकः स्वां द्युतिमातनोति ॥ ७ ॥**

सम्प्रति कविः श्रीवेदव्यासकृते श्रीमहाभारते विद्यमानस्य नलचरितस्य स्वप्रबन्धेऽपि उपात्तत्वात् तत्र विषये व्यासं प्रति स्वनैच्यानुसन्धानं करोति ॥

**अत्र इति** ॥ अत्र अस्मिन्, प्रबन्धे काव्ये, रचिते वर्णिते, इतिवृत्ते कथावस्तुनि विषये, पुराणः पुरातनः, मुनिः व्यासमहर्षिः इत्यर्थः, मुधा वृथा, (मह्यं) क्रुद्धः कुपितः 'अस्मत्कृतमहाभारतस्थमेव नलचरितं अयं कुकविरपि अस्मत्स्पर्धया स्वप्रबन्धे वर्णयति' इति कोपं प्रपन्नः इत्यर्थः, मास्तु माभूत् । तत्र दृष्टान्तं आह — खे आकाशे द्योतते प्रकाशते इति खद्योतः ज्योतिरिङ्गणः प्रभाकीटः इति यावत् अल्पः खद्योतः खद्योतकः (अल्पार्थे कन् स्वार्थे वा), सहस्रं धामानि किरणाः यस्य सः सहस्रधामा तस्य सहस्रधाम्नः सूर्यस्य, स्पर्धया प्रतिद्वन्द्वितया हेतुना, व्योम्नि आकाशे, स्वां निजां, द्युतिं कान्तिं, न आतनोति न आस्तृणोति ॥ **इन्द्रवज्रा वृत्तम्** ॥ तल्लक्षणं तु "स्यादिन्द्रवज्रा **ततजास्ततो गौ**" ॥

**आसीदसीम्ना सहजेन धाम्ना**
**निषिद्धशत्रुर्निषधेष्वधीशः ।**
**अनन्यसाधारणवीरसेनं**
**यं वीरसेनं सुधियो वदन्ति ॥ ८ ॥**

कविः इदानीं स्वप्रबन्धकथां प्रस्तौति ॥ **आसीत् इति** ॥ निषधेषु निषधानां जनपदः निवासः निषधाः तेषु निषधदेशे इत्यर्थः ("तस्य निवासः"

इति अण् प्रत्यये प्राप्ते, "जनपदे लुप्" इति तस्य लोपः), न विद्यते सीमा यस्य तेन असीम्ना अनन्तेन अपरिमितेन इति यावत्, सहजेन स्वतस्सिद्धेन, धाम्ना तेजसा, निषिद्धशत्रुः निषिद्धाः निराकृताः दूरीकृताः इति यावत् शत्रवः अरयः येन सः तादृशः, अधीशः अधिपतिः, आसीत् वर्तते स्म । अनन्यसाधारणवीर-सेनं अन्यैः साधारणाः न भवन्ति इति अनन्यसाधारणाः अनन्यसामान्याः लोकोत्तराः इति यावत् तादृशाः वीराः शूराः सेनायां यस्य तादृशं, यं निषधेश्वरं, सुधियः प्राज्ञाः, वीरसेनं वीरसेननामानं, वदन्ति कथयन्ति ॥ ८ ॥

**मध्यन्दिने म्लायति कृष्णवर्त्मा**
**दिनावसाने रविरस्तमेति ।**
**यस्य प्रतापः प्रतिपार्थिवानां**
**दिवानिशं दुर्विषहो बभूव ॥ ९ ॥**

अथ कविः षड्भिः श्लोकैः तं नृपं विशिनष्टि ।

**मध्यन्दिने इति** ॥ कृष्णं वर्त्म मार्गः यस्य सः कृष्णवर्त्मा अग्निः ("बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।" इति अमरः), दिनस्य मध्यं तस्मिन् मध्यन्दिने मध्याह्ने दिवा इति यावत् (मध्यन्दिनशब्दः उत्सादिषु पठितः), म्लायति म्लानिं गच्छति निस्तेजस्कः भवति इत्यर्थः । रविः सूर्यश्च, दिनावसाने दिनस्य अवसानं तस्मिन् दिनान्ते सायंकाले इति यावत्, अस्तं अस्तमयं, एति गच्छति । यस्य वीरसेननृपतेः, प्रतापः पौरुषं तु ("प्रतापौ पौरुषातपौ"। इति यादवः), प्रतिपार्थिवानां शत्रुराजानां, दिवा च निशायां च दिवानिशं रात्रिन्दिवं सर्वदा इत्यर्थः, दुःखेन विसोढुं शक्यः दुर्विषहः अतिदुस्सहः, बभूव अभवत् । दिवा अग्नेः तेजसः मालिन्यं भवति; रात्रौ सूर्यस्य तेजसः मालिन्यं जायते । अस्य नृपतेः प्रतापस्य तु सदा दुस्सहत्वात् अग्निसूर्याभ्यामपि उत्कर्षः व्यज्यते ॥ ९ ॥

**शरन्निशानाथमरीचिगौरै-**
**र्विसृत्वरैर्यस्य यशःप्रवाहैः ।**

**प्रक्षाल्यमानेऽपि जगत्यरीणां**
**मलीमसान्येव मुखान्यभूवन् ॥ १० ॥**

**शरदिति** ॥ शरदि शरत्काले यः निशानाथः चन्द्रः तस्य मरीचयः किरणाः तद्वत् गौराः अवदाताः तैः शरच्चन्द्रमयूखवत् अतिस्वच्छैः इत्यर्थः, विसृत्वरैः विसरणशीलैः ("इण् नशजिसर्तिभ्यः क्वरप्" इति सृधातोः शीलार्थे क्वरप् प्रत्ययः), यस्य वीरसेनस्य, यशःप्रवाहैः यशांसि एव प्रवाहाः जलौघाः तैः, जगति भुवने, प्रक्ष्याल्यमाने निर्मलीक्रियमाणे सत्यपि, अरीणां तच्छत्रूणां, मुखानि वदनानि, मलीमसानि एव मलिनानि एव, अभूवन् आसन् (सर्वत्र तत्कीर्तिप्रसरणं दृष्ट्वा शत्रवः सर्वे विषण्णवदनाः अभवन् इति भावः) ॥ १० ॥

**युगान्तवातैस्तरलीकृतोर्मि-**
**वेलामतिक्रामति तोयराशिः ।**
**द्विषां जयैरुन्नतिमागतोऽपि**
**न लङ्घयामास नृपः स्थितिं यः ॥ ११ ॥**

**युगान्तेति** ॥ तोयानां राशिः तोयराशिः जलनिधिः, युगान्ते युगप्रलये ये वाताः प्रचण्डानिलाः तैः, तरलीकृतोर्मिः तरलीकृताः चञ्चलीकृताः ऊर्मयः वीचयः यस्य सः तथाभूतः सन्, वेलां तीरं मर्यादां वा, अतिक्रामति उल्लङ्घयति । यः, नृपः वीरसेनराजः तु, द्विषां स्वशत्रूणां, जयैः पराजयैः, उन्नतिं औन्नत्य, आगतः अपि प्राप्तः सन् अपि, स्थितिं स्वमर्यादां, न लङ्घयामास न अतिचक्राम ॥ ११ ॥

**दोर्दण्डदर्पस्तपनो यदीय-**
**स्तमो निरस्यन्नपि लोकवर्त्ति ।**
**प्रत्यर्थिपृथ्वीपतिमण्डलस्य**
**निमीलयामास मुखाम्बुजानि ॥ १२ ॥**

**दोरिति** ॥ यस्य अयं यदीयः यत्संबन्धी, दोर्दण्डदर्पः दोषौ भुजौ दण्डौ इव दोर्दण्डौ भुजदण्डौ तयोः दर्पः अवलेपः (तद्रूपः), तपनः सूर्यः, लोके ताच्छील्येन वर्तते इति लोकवर्ति भुवनस्थं ('लोकवृत्ति' इति पाठे लोके वृत्तिः वर्तनं यस्य तत् इति व्याख्येयं), तमः पापरूपं अन्धकारं, निरस्यन् अपि उत्सारयन् अपि, प्रत्यर्थिपृथ्वीपतयः प्रतिपक्षनृपाः तेषां मण्डलं समूहः तस्य,

मुखानि एव अम्बुजानि पद्मानि वदनकमलानि, निमीलयामास मुकुलयांचकार। प्रसिद्धः सूर्यः लोकस्थितं तमः निरस्यति अम्बुजानि च विकासयति। अस्य भुजदण्डदर्परूपः सूर्यस्तु पापरूपं तमः दूरीकुर्वन्नपि शत्रुनृपतिमुखाम्बुजानि न विकासयति प्रत्युत मुकुलयति इति अहो अस्य वैलक्षण्यं इति फलितार्थः ॥ १२ ॥

**क्वचिन्न या रज्यति भुज्यमाना**
**गाढानुरागैरपि मेदिनीन्द्रैः।**
**सैव क्षितिर्यं पतिमभ्युपेत्य**
**पतिव्रतानां व्रतमन्वतिष्ठत् ॥ १३ ॥**

**क्वचित् इति** ॥ या क्षितिः, गाढानुरागैः गाढः अत्यन्तः अनुरागः प्रीतिः येषां तैः तथोक्तैः, मेदिनीन्द्रैः मेदिन्याः इन्द्राः तैः क्षितीशैः अन्यैः नृपतिभिः इति यावत्, भुज्यमाना अनुभूयमाना अपि, क्वचित् कुत्रचिदपि नृपे, न रज्यति अनुरक्ता न भवति; सा एव, क्षितिः भूमिः, यं वीरसेनं, पतिं भर्तारं, अभ्युपेत्य लब्ध्वा, पतिसेवा एव व्रतं यासां ताः (पत्यौ व्रतं यासां ताः, पत्या सह व्रतं यासां ताः वा) पतिव्रताः तासां पतिव्रतानां साध्वीनां, व्रतं नियमं, अन्वतिष्ठत् आचरत् (यः अनन्यशासनं यथा तथा भुवं शशास इति भावः) ॥ १३ ॥

**निजेन धाम्ना जगतोऽखिलस्य**
**दोषापनोदाय समुद्यतस्य।**
**द्वीपेषु सप्तस्वपि निर्विशेषः**
**करोदयो यस्य रवेरिवासीत् ॥ १४ ॥**

**निजेन इति** ॥ निजेन स्वकीयेन स्वतः सिद्धेन वा, धाम्ना प्रतापेन पौरुषेण इति यावत्, अखिलस्य समस्तस्य, जगतः लोकस्य प्रजानां इति यावत्, दोषापनोदाय दोषाणां स्खलितानां छिद्राणां वा अपनोदः उत्सारणं तस्मै, समुद्यतस्य जागरूकस्य, यस्य वीरसेनस्य, करोदयः करस्य बलेः षष्ठांशरूपस्य राजस्वस्य इति यावत् उदयः उपचयः इत्यर्थः, निजेन स्वीयेन, धाम्ना तेजसा, अखिलस्य कृत्स्नस्य, जगतः विश्वस्य,

दोषापनोदाय दोषाणां तमसां पापानां च अपनोदाय दूरीकरणाय, समुद्यतस्य जाग्रतः, रवेः सूर्यस्य, करोदयः इव करागां किरणानां उदयः आविर्भावः इव, सप्तसु अपि जम्बूप्लक्षशाककौञ्चादिसप्तसंख्याकेषु अपि, द्वीपेषु अन्तरीपेषु ("द्वीपोऽस्त्रियामन्तरीपं" इत्यमरः), निर्गतः विशेषः यस्मात् सः निर्विशेषः तुल्यः, आसीत् अभूत् ॥ १४ ॥

**अपि प्रभुः शास्त्रनियन्त्रितत्वा-**
**द्धर्मार्थकामानिव तुल्यवृत्तिः ।**
**पौरानसौ जानपदांश्च नित्य-**
**मन्योन्यबाधारहितं बभार ॥ १५ ॥**

**अपि इति** ॥ असौ वीरसेनः, प्रभुः अपि सर्वेषां नियन्ता सन् अपि, शास्त्रनियन्त्रितत्त्वात् शास्त्रैः मनुस्मृत्यादिभिः नियन्त्रितः वशीकृतः तस्य भावः तस्मात् अनुल्लङ्घितशास्त्रमर्यादत्वात् हेतोः इत्यर्थः, तुल्यवृत्तिः तुल्या समाना वृत्तिः वर्तनं परिपालनपरिपाटी इत्यर्थः यस्य सः तथाभूतः सन्, पुरे भवाः तान् पौरान् स्वपुरवासिनः, जनपदे भवाः तान् जानपदान् च ग्रामवासिनश्च, धर्मश्च अर्थश्च कामश्च तान् धर्मार्थकामान् इव त्रिवर्गं यथा, नित्यं सदा, अन्योन्यबाधारहितं अन्योन्यं परस्परं बाधा व्याघातः तया रहितं विहीनं यथा तथा, बभार पुपोष परिपालयामास इति यावत् । (यथा अर्थकामसाधनयोः दण्डविवाहयोः लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेन अनुष्ठानात् अर्थकामौ अपि धर्मशेषतां आपादयन् परस्परबाधारहितं यथा तथा पुपोष ; तथा पौरान् जानपदांश्च पक्षपातरहितं यथा तथा पालयामास इत्यर्थः) ॥ १५ ॥

**दिशामधीशैः पुरुहूतमुख्यै-**
**रपि प्रकामं स्पृहणीयलक्ष्मीः ।**
**ततः क्षितीन्द्रात्तनयोऽधिजज्ञे**
**क्षीराम्बुराशेरिव कल्पवृक्षः ॥ १६ ॥**

**दिशां इति** ॥ पुरुहूतमुख्यैः पुरुहूतः इन्द्रः मुख्यः येषां तैः इन्द्रादिभिः इति यावत् ("वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः ।" इत्यमरः), दिशां

ककुभां अधीशैः अधिपतिभिः दिक्पालकैः अपि इति यावत्, प्रकामं भृशं, स्पृहणीयलक्ष्मीः स्पृहणीया लोभनीया लक्ष्मीः श्रीः यस्य सः तादृशः, तनयः सुतः, क्षीराम्बुराशेः क्षीरसमुद्रात्, कल्पवृक्षः इव सुरतरुः इव, ततः तस्मात्, क्षितीन्द्रात् वरिसेननृपात्, अधिजज्ञे संबभूव ॥ १६ ॥

**तस्मिन्क्षणे प्राङ्गणसीम्नि राज्ञः**
**प्रसूनवृष्टिर्नभसः पपात ।**
**नीरन्ध्रमासादितया समन्ता-**
**द्यया हसन्तीव मही विरेजे ॥ १७ ॥**

**तस्मिन् इति** ॥ तस्मिन्, क्षणे पुत्रजननसमये पुत्रजननरूपोत्सवे वा ("निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।" इत्यमरः), राज्ञः वीरसेननृपतेः, प्राङ्गणसीम्नि प्राङ्गणस्य गृहचत्वरस्य सीम्नि पर्यन्तप्रदेशे ("अङ्गणं चत्वराजिरे ।' इत्यमरः), प्रसूनानां पुष्पाणां वृष्टिः वर्षं ("प्रसूनं कुसुमं सुमं" इत्यमरः), नभसः आकाशात् ("नभोऽन्तरिक्षङ्गगनं" इत्यमरः), पपात पतति स्म । समन्तात् समन्ततः विष्वक् इति यावत्, नीरन्ध्रं अविरलं यथा तथा, आसादितया प्राप्तया, यया प्रसूनवृष्ट्या, मही भूमिः, हसन्ती इव स्मयमाना इव, विरेजे बभौ ॥ १७ ॥

**वसुन्धरे सागरमेखलां त्वा-**
**मनन्यसाधारणमेष भोक्ता ।**
**इतीव नादैः प्रथयांबभूवु-**
**र्बृन्दानि बृन्दारकदुन्दुभीनाम् ॥ १८ ॥**

**वसुन्धरे इति** ॥ बृन्दारकदुन्दुभीनां बृन्दारकाणां देवानां ("बृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम् ।" इत्यमरः) दुन्दुभीनां भेरीणां ("भेरी स्याद्दुन्दुभिः पुमान्" इत्यमरः) तत्पुत्रजननसमये देवैः ताडितानां इत्यर्थः, बृन्दानि समूहाः, नादैः स्वध्वनिभिः "वसुन्धरे हे वसुधे ("वसुधोर्वी वसुन्धरा ।" इत्यमरः), एषः अयं वीरसेनतनयः, सागरः मेखला रशना यस्याः सा सागरमेखला तां तादृशीं समुद्रपर्यन्तां इत्यर्थः, त्वां भवतीं,

अनन्यसाधारणं एव अनन्यसामान्यं यथा तथा एव, भोक्ता पालयिता (भुज पालने इति धातोः कर्तरि लुटि प्रथमपुरुषैकवचनं)।" इति इत्थं, प्रथयांबभूवुः इव उद्घोषयामासुः इव ॥ १८ ॥

तदा कुमारोदयमङ्गलश्री-
रास्थानभाजः पृथिवीश्वरस्य ।
न्यवेदि पूर्वं सुरपुष्पवर्षै-
र्योषिन्नियुक्तैश्चरमं तु चारैः ॥ १९ ॥

**तदा इति** ॥ तदा तस्मिन् समये, आस्थानं सभामण्डपं भजति इति आस्थानभाक् तस्य आस्थानभाजः सभागृहस्थस्य, पृथिव्याः ईश्वरः तस्य पृथिवीश्वरस्य वीरसेनमहीपतेः, (निकटे इति शेषः), कुमारोदयमङ्गलश्रीः कुमारस्य पुत्रस्य यः उदयः जननं तदेव मङ्गलं तस्य श्रीः समृद्धिः, सुरपुष्पवर्षैः सुराणां देवानां पुष्पवर्षाणि कुसुमवृष्टयः तैः, पूर्वं प्रथमं, न्यवेदि आख्यायि । योषिन्नियुक्तैः योषिद्भिः अन्तःपुरस्त्रीभिः नियुक्तैः प्रेषितैः, चारैः तु प्रणिधिभिः गूढचरैः दूतैः पुनः इति यावत् ("चारस्तु गूढपुरुषः" इत्यमरः), चरमं पश्चात्, (न्यवेदि) ॥ १९ ॥

दुःखैरसंभिन्नगुरुप्रमोदा
दोषेऽप्यनास्वादितदण्डभीतिः ।
सङ्कल्पमात्रोपनतार्थसिद्धि-
स्तदाभवद्द्यौरिव राजधानी ॥ २० ॥

**दुःखैः इति** ॥ तदा तस्मिन् समये, धीयते अस्यां इति धानी राज्ञः धानी राजधानी प्रधाननगरी, दुःखैः व्यसनैः, असंभिन्नः अमिश्रितः गुरुः अपरिमितः च इत्यर्थः प्रमोदः आनन्दः यस्यां सा तादृशी, दोषे प्रजाकृतापराधे सत्यपि, अनास्वादिता अननुभूता दण्डात् राजकृतशिक्षणात् भीतिः भयं यस्यां सा तादृशी, सङ्कल्पमात्रेण इच्छामात्रेण यथेच्छं इत्यर्थः उपनतः लब्धः अर्थस्य द्रविणस्य कार्यस्य वा सिद्धिः लाभः यस्यां सा तादृशी च सती, (अतः एव), द्यौः इव स्वर्गलोकः इव, अभवत् बभूव ॥ (राज्ञः पुत्रजननात् तत्पुरवासिनः सर्वे अमन्दा-

नन्दभरिताः आसन्; राजा च तद्धर्षातिरेकात् दण्डार्हानपि न अदण्डयत्; अर्थिजनेभ्यः भूरिद्रविणदानं च कृतवान् इति भावः ) ॥ २० ॥

**अन्तःपुरस्थोऽपि नरेन्द्रसूनु-**
**रानन्दयामास विशां मनांसि ।**
**पूर्वाद्रिशृङ्गान्तरितोऽपि भास्वान्**
**प्रसादयत्येव दिशां मुखानि ॥ २१ ॥**

**अन्तःपुरस्थः इति** ॥ नरेन्द्रसूनुः नरेन्द्रस्य वीरसेननृपतेः सूनुः तनयः, अन्तःपुरस्थः अवरोधे वर्तमानः सन्नपि ("कन्यागारं भूभुजामन्तः-पुरं स्यादवरोधनं । शुद्धान्तश्चावरोधश्च" इत्यमरः), विशां नराणां ("द्वौ विशौ वैश्यमनुजौ" इत्यमरः), मनांसि चेतांसि, आनन्दयामास सन्तोषयाञ्चकार । तत्र दृष्टान्तं आह— भासः अस्य सन्ति इति भास्वान् सूर्यः, पूर्वाद्रेः उदयपर्वतस्य शृङ्गैः शिखरैः अन्तरितः आवृतः सन्नपि, दिशां ककुभां, मुखानि वदनानि दिक्पुरोभागान् इत्यर्थः, प्रसादयति एव विशदीकरोति खलु ॥ २१ ॥

**ततो नियोगादवनीश्वरस्य**
**पुरोधसा निर्मितजातकर्मा ।**
**स राजसूनुः सुतरां विरेजे**
**नीहारनिर्मुक्त इवोष्णरश्मिः ॥ २२ ॥**

**ततः इति** ॥ ततः अनन्तरं, अवनेः पृथिव्याः ईश्वरः तस्य अवनीश्वरस्य वीरसेननृपतेः, नियोगात् शासनात्, पुरोधसा पुरोहितेन, ("पुरोधास्तु पुरोहितः" इत्यमरः), निर्मितं कृतं जातकर्म जातस्य कर्तव्यसंस्कारविशेषः यस्य सः तादृशः, सः, राज्ञः सूनुः राजसूनुः राजकुमारः, नीहारेभ्यः हिमेभ्यः ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।" इत्यमरः) निर्मुक्तः विमुक्तः अनवरुद्धः इति यावत्, उष्णाः रश्मयः यस्य सः उष्णरश्मिः सूर्यः इव, सुतरां अत्यन्तं, विरेजे बभौ ॥ २२ ॥

विलोकमानः कमनीयरूपं
कुमारमारोप्य तमङ्कदेशे ।
निमेषचेष्टामपि पक्ष्मपङ्क्त्यो-
श्चिरं विसस्मार महीमहेन्द्रः ॥ २३ ॥

**विलोकमानः इति** ॥ मह्याः महेन्द्रः महीमहेन्द्रः वीरसेनाक्षितीशः, कमनीयं मनोज्ञं रूपं आकृतिः यस्य तं, तं तादृशं, कुमारं पुत्रं, अङ्कदेशे उत्सङ्गे, आरोप्य निवेश्य, विलोकमानः निरीक्षमाणः सन्, पक्ष्मणां पङ्क्ती तयोः पक्ष्मपङ्क्त्योः पक्ष्मराज्योः, निमेषचेष्टां अपि निमीलनरूपकर्मापि पक्ष्मसङ्कोचमपि, चिरं बहुकालपर्यन्तं, विसस्मार विस्मृतवान् आसीत् । तं कुमारं निर्निमेषं यथा तथा चिरं निरीक्षितवान् इत्यर्थः ॥ **उपेन्द्रवज्रा** वृत्तम् ॥ तल्लक्षणं तु— 'उपेन्द्रवज्रा **जतजास्ततो गौ** ॥' ॥ २३ ॥

लब्ध्वार्थकामार्जनकोविदत्व-
मयं न लीयेत कदापि पापे ।
इतीव निश्चित्य गुरुर्निमित्तै-
श्चकार नाम्ना नलमात्मजं तम् ॥ २४ ॥

संप्रति कविः राज्ञा स्वतनयस्य अन्वर्थं नाम कृतं इति आह—

**लब्ध्वा इति** ॥ 'अयं एषः पुत्रः, अर्थश्च कामश्च अर्थकामौ तयोः अर्जने संपादने कोविदः प्रवीणः तस्य भावः तत्, लब्ध्वा प्राप्य, कदापि कुत्रचित् समयेऽपि, पापे दुष्कृते, न लीयेत लीनः न भवेत् ।' इति एवं, निमित्तैः हेतुभिः, निश्चित्य इव निश्चयं कृत्वा इव, गुरुः पुरोहितः पिता वा ("गुरू गीष्पतिपित्राद्यौ" इत्यमरः), तं, आत्मनः जायते इति तं आत्मजं सुतं, नाम्ना अभिधानेन, नलं नलनामानं इत्यर्थः, चकार कृतवान् ॥ २४ ॥

तस्यानिमित्तस्मितचन्द्रिकाभि-
र्यथा यथा जृम्भितमर्भकस्य ।

**तथा तथासीदवनीश्वरस्य**
**प्रमोदवारांनिधिरुत्तरङ्गः ॥ २५ ॥**

**तस्य इति** ॥ तस्य तादृशस्य, अर्भकस्य शिशोः ("पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।" इत्यमरः), नास्ति निमित्तं येषां तानि अनिमित्तानि अकारणानि तादृशानि स्मितानि मन्दहासाः तानि एव चन्द्रिकाः ज्योत्स्नाः ताभिः, यथा यथा येन येन प्रकारेण, जृम्भितं आविर्भूयतेस्म इत्यर्थः; तथा तथा तेन तेन प्रकारेण, अवनीश्वरस्य भूपतेः, प्रमोदवारांनिधिः प्रमोदः अत्यन्तहर्षः सम्मदः इति यावत् सः एव वारांनिधिः जलनिधिः, उत्तरङ्गः उद्भूताः तरङ्गाः यस्मिन् सः तादृशः अत्यन्तं क्षुब्धः इत्यर्थः, आसीत् अभूत् ॥ २५ ॥

**पद्भ्यां हरिद्रारसरञ्जिताभ्यां**
**स्पृष्टा मही यत्कमलाङ्किताभूत् ।**
**तेनैव तस्मिन्कमलोद्भवायाः**
**सान्निध्यमुच्चैः प्रथयांबभूव ॥ २६ ॥**

**पद्भ्यां इति** ॥ यत् येन कारणेन, मही भूमिः, हरिद्रारसरञ्जिताभ्यां हरिद्रायाः निशाख्यायाः पीतायाः इति यावत् ('निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी।' इत्यमरः) रसः द्रवः तेन रञ्जितौ चर्चितौ ताभ्यां, पद्भ्यां शिशोः चरणाभ्यां, स्पृष्टा स्पर्शं प्रापिता सती इत्यर्थः, कमलाङ्किता कमलैः तत्पादस्थपद्माकाररेखाभिः इत्यर्थः अङ्किता चिह्निता सञ्जातचिह्ना इति यावत्, अभूत् बभूव; तेन कारणेन एव, (सा मही), तस्मिन् नले, कमलोद्भवायाः कमले उद्भवः यस्याः तस्याः पद्मसंभवायाः लक्ष्म्याः इति यावत्, सन्निधेः भावः सान्निध्यं सन्निधानं आभिमुख्यं इति यावत्, उच्चैः भृशं, प्रथयांबभूव प्रकटीचकार ॥ **इन्द्रवज्रा** वृत्तम् ॥ २६ ॥

**बाल्यादनाविष्कृतवर्णभेदै-**
**र्वचोभिरर्धोच्चरितैस्तदीयैः ।**
**राज्ञः प्रमोदः प्रथमं व्यधायि**
**लिङ्गैस्तु पश्चात्कथितस्तदर्थः ॥ २७ ॥**

**बाल्यात् इति** ॥ बालस्य भावः बाल्यं तस्मात् बाल्यात् शैशवात् हेतोः, अनाविष्कृतः अस्पष्टीकृतः वर्णानां अक्षराणां भेदः व्यत्यासः येषु तैः तादृशैः, अर्धोच्चरितैः असमग्रं यथा तथा उदीरितैः, तस्य इमानि तदीयानि तैः तदीयैः तत्संबन्धिभिः, वचोभिः जल्पितैः, प्रथमं पूर्वं, राज्ञः वीरसेनभूपतेः, प्रमोदः प्रहर्षः, व्यधायि अतानि । तदर्थः तेषां वचनानां अर्थः अभिधेयं तु, पश्चात् तदनन्तरं, लिङ्गैः संज्ञाभिः संकेतैः वा, कथितः निवेदितः (आसीत्) ॥ २७ ॥

**निर्मीयमाणा निपुणैर्नृपस्य**
**नेपथ्यलक्ष्मीर्न तथा प्रियासीत् ।**
**यथा यदृच्छारसिकस्य तस्य**
**विलुप्यमाना करपल्लवेन ॥ २८ ॥**

**निर्मीयमाणा इति** ॥ निपुणैः अतिसमर्थैः प्रसाधकैः, निर्मीयमाणा क्रियमाणा, नेपथ्यलक्ष्मीः चन्दनकुसुमतिलकादिस्वालंकारशोभा, नृपस्य राज्ञः वीरसेनस्य, तथा तेन प्रकारेण, प्रिया सन्तोषकरी, न आसीत्; यदृच्छारसिकस्य यदृच्छायां स्वाच्छन्द्ये स्वैराचरणे इति यावत् रसिकस्य उत्सुकस्य, तस्य बालस्य, करपल्लवेन करः पल्लवः इव तेन पाणिकिसलयेन, विलुप्यमाना विनाश्यमाना विक्रियमाणा सती, यथा येन प्रकारेण, (प्रिया आसीत्) ॥ १८ ॥

**संस्पर्धमानेव नराधिपस्य**
**प्रमोदलक्ष्मीं मुहुरुल्लसन्तीम् ।**
**दिने दिने तस्य शरीरयष्टि-**
**र्नवां नवां वृद्धिमुपारुरोह ॥ २९ ॥**

**संस्पर्धमाना इति** ॥ तस्य नलस्य, शरीरं यष्टिः इव शरीरयष्टिः गात्रलता तनुतरं गात्रं इत्यर्थः, मुहुः पुनः पुनः, उल्लसन्तीं प्रवर्धमानां इत्यर्थः, नराधिपस्य वीरसेननृपतेः, प्रमोदलक्ष्मीं प्रहर्षसंपत्तिं, संस्पर्धमाना इव संघर्षन्ती इव विजिगीषमाणा इव इत्यर्थः, दिने दिने प्रतिदिनं, नवां नवां अतिनूतनां, वृद्धिं उपचयं, उपारुरोह उपजगाम ॥ २९ ॥

**अभ्यासहेतोः क्षिपतः पृषत्कान्**
**ज्याकृष्टिजन्मा ध्वनिरस्य योऽभूत् ।**

तेनैव दर्पः प्रतिपार्थिवानां
धनुर्भृतां दूरतरं निरस्तः ॥ ३० ॥

**अभ्यासहेतोः इति** ॥ अभ्यासहेतोः अनुशीलनार्थे परिचयार्थे इति यावत्, पृषत्कान् बाणान् ('पृषत्कबाणविशिखाः' इत्यमरः), क्षिपतः अस्यतः, अस्य नलस्य, ज्याकृष्टिजन्मा ज्यायाः मौर्व्याः आकृष्टिः आकर्षण तस्मात् जन्म उत्पत्तिः यस्य तादृशः धनुषि गुणारोपणेन जातः इत्यर्थः, यः ध्वनिः शब्दः, अभूत् उदभवत्; तेन एव तादृशेन ध्वनिना एव, धनूंषि बिभ्रति इति धनुर्भृतः तेषां धनुर्भृतां धानुष्काणां धनुर्विद्याविशारदानां इत्यर्थः, प्रतिपार्थिवानां प्रत्यर्थिनृपाणां, दर्पः धनुर्विद्याकौशलजनितः अहंकारः, दूरतरं अतिदूरं, निरस्तः अपाकृतः, (आसीत्) ॥ ३० ॥

न केवलं लोचनवर्त्मवर्ति
शराः शरव्यं जगृहुस्तदीयाः ।
शब्देन दूरादनुमीयमानं
विचिन्त्यमानं मनसापि भेजुः ॥ ३१ ॥

**न इति** ॥ तस्य इमे तदीयाः नलसंबन्धिनः, शराः बाणाः, लोचनयोः नयनयोः वर्त्मनि मार्गे वर्तते इति लोचनवर्त्मवर्ति दृश्यं इत्यर्थः, शृणाति इति शरुः (=शराशिक्षा); शरवे हितं शरव्यं लक्ष्यं केवलं ('उगवादिभ्यो यत्' इति यत् प्रत्ययः) ('लक्ष्यं लक्षं शरव्यं च' इत्यमरः), न जगृहुः न अविध्यन् इत्यर्थः; (अपितु), दूरात् दूरप्रदेशात्, शब्देन ध्वनिना, अनुमीयमानं ऊह्यमानं, (तथा), मनसा चित्तेन, विचिन्त्यमानं आलोच्यमानं, शरव्यं अपि, भेजुः प्रापुः आविध्यन् इत्यर्थः । तस्य बाणाः न केवलं दृश्यलक्ष्यवेधिनः; अपि तु शब्दवेधिनः चिन्तितवेधिनश्च अभवन् इति भावः ॥ ३१ ॥

आतिथ्यमक्ष्णोः क्षणमभ्युपैति
सौदामनी व्योम्नि विजृम्भमाणा ।
कृपाणपाणेर्धृतचर्मणस्तु
नलस्य नालक्षि गतिर्जवेन ॥ ३२ ॥

**आतिथ्यं इति** ॥ व्योम्नि आकाशे ('व्योमपुष्करमम्बरम्।' इत्यमरः), विजृम्भमाणा आविर्भवन्ती, सुदाम्ना अद्रिणा सह एकदिक् सौदामनी विद्युत् ('तडित् सौदामनी विद्युत्' इत्यमरः), क्षणं क्षणकाले अपि, अक्ष्णोः नयनयोः, अतिथये इदं आतिथ्यं ('अतिथेर्ञ्यः' इति ञ्यप्रत्ययः) नयनगोचरत्वं इत्यर्थः, अभ्युपैति प्राप्नोति। कृपाणः करवालः खड्गः इति यावत् सः पाणौ यस्य तस्य कृपाणपाणेः करधृतखड्गस्य इत्यर्थः, धृतं चर्म फलकः येन तस्य धृतचर्मणः करगृहीतचर्मणः इत्यर्थः ('फलकोऽस्त्री फलं चर्म' इत्यमरः), नलस्य, गतिः तु मार्गः पुनः योधनप्रकारः पुनः, जनैः लोकैः, न आलक्षि न दृश्यते स्म। शस्त्रयुद्धे तस्य हस्तलाघवं विद्युतोऽपि वेगवत्तरं इति भावः ॥ ३२ ॥

**विद्यासु सर्वासु तथा चकार**
**परिश्रमं राजसुतः क्रमेण।**
**निश्चायकं संशयितेऽर्थतत्त्वे**
**मेने यथैनं निवहो गुरूणाम् ॥ ३३ ॥**

**विद्यासु इति** ॥ गुरूणां पूज्यानां महतां इति यावत्, निवहः समूहः, संशयिते संदिग्धे संजातसंशये इति यावत्, अर्थतत्त्वे अर्थस्य शास्त्रार्थस्य तत्त्वे याथार्थ्ये विषये, एनं इमं नलं, निश्चायकं निर्णायकं, यथा, मेने मन्यते स्म; तथा, राज्ञः सुतः राजसुतः वीरसेनतनयः नलः, सर्वासु समस्तासु अपि, विद्यासु शास्त्रेषु इत्यर्थः, क्रमेण कालक्रमेण गच्छता कालेन इत्यर्थः, परिश्रमं परिशीलनं परिचयं इति यावत्, चकार कृतवान् ॥ ३३ ॥

**अथौषधिः कान्तिविशेषवृद्धेः**
**साम्राज्यलक्ष्मीः स्मरपार्थिवस्य।**
**नीराजना विक्रमकुञ्जरस्य**
**नलं सिषेवे नवयौवनश्रीः ॥ ३४ ॥**

**अथ इति** ॥ अथ विद्यापरिशीलनानन्तरं, कान्तिविशेषवृद्धेः कान्तिविशेषस्य लावण्यातिशयस्य वृद्धेः उपचयस्य, ओषधिः दिव्यौषधिः तत्तुल्या इत्यर्थः, स्मरः एव पार्थिवः तस्य स्मरपार्थिवस्य मन्मथराजस्य, साम्राज्यलक्ष्मीः सम्राजः भावः साम्राज्यं तस्य लक्ष्मीः श्रीः इव स्थिता, विक्रमकुञ्जरस्य विक्रमः

पराक्रमः एव कुञ्जरः गजः तस्य, नीराजना नीराजनाख्यं शान्तिकर्म आरात्रिकं इति यावत् तद्वत् स्थिता इत्यर्थः, नवयौवनश्रीः यौवनस्य श्रीः यौवनश्रीः नवा च सा यौवनश्रीश्च अभिनवतारुण्यसमृद्धिः इत्यर्थः, नलं वैरसेनिं, सिषेवे भेजे। नलः यौवनं आरोढुं आरभत इति भावः ॥३४॥

पीयूषरश्मेरपहाय मध्यं
भजेदुपान्तं यदि लक्ष्मलेखा।
नवोदितश्मश्रुलताभिरामं
तदोपमीयेत मुखं नलस्य ॥ ३५ ॥

अथ कविः पञ्चभिः श्लोकैः तस्य यौवनलक्षणं आह ॥

**पीयूषेति** ॥ पीयूषमयाः अमृतमयाः रश्मयः किरणाः यस्य तस्य पीयूषरश्मेः सुधांशोः चन्द्रस्य इति यावत्, लक्ष्मलेखा लक्ष्मणः अङ्कस्य लेखा रेखा लेखारूप लक्ष्म इत्यर्थः, मध्यं तन्मण्डलमध्यभाग, अपहाय विहाय मुक्त्वा इति यावत्, उपान्त तन्मण्डलपर्यन्तदेशं, भजेत् यदि गच्छति चेत, तदा तर्हि, नवोदिता प्रत्यग्रोत्पन्ना या श्मश्रुलता मुखरोमवल्ली ('तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुमुखे।" इत्यमरः) तया अभिराम मनोज्ञ, नलस्य, मुख वदन, उपमीयेत इन्दुना सदृशीक्रियेत ॥ ३५ ॥

महीभुजां संयति निर्जितानां
श्रियः करिष्यन्ति निवासमस्मिन्।
इतीव निश्चित्य विधिश्चकार
प्रकामविस्तीर्णममुष्य वक्षः ॥ ३६ ॥

**महीभुजां इति** ॥ 'संयति युद्धे ('समवायः स्त्रियां संयत् समित्याजिसमिद्युधः।' इत्यमरः), निर्जितानां पराजितानां अभिभूतानां इति यावत्, महीभुजां राज्ञां, श्रियः राजलक्ष्म्यः, अस्मिन् एतस्मिन् नले, निवासं निवसतिं स्थितिं इति यावत्, करिष्यन्ति विधास्यन्ति।' इति एवं, निश्चित्य इव निर्धार्य इव, विधिः स्रष्टा, अमुष्य अस्य नलस्य, वक्षः उरःस्थल, प्रकामविस्तीर्ण अत्यन्तविशालं, चकार कृतवान् ॥ **उपेन्द्रवज्रा वृत्तम्** ॥ ३६ ॥

नरेन्द्रसूनुः कृशिमातिरेकात्
परं न मध्येन जिगाय सिंहान् ।
दृप्तारिवीरद्विपदारणेन
नैसर्गिकेणापि पराक्रमेण ॥ ३७ ॥

**नरेन्द्रेति** ॥ नरेन्द्रसूनुः वीरसेननृपतितनयः नलः, कृशिमातिरेकात् कृशिम्नः कृशत्वस्य अतिरेकात् आधिक्यात् मध्यस्य अत्यन्तकार्श्यात् हेतोः इत्यर्थः, मध्येन परं अवलग्नेन एव केवलं मध्येन एकेन एव इत्यर्थः ('मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः), सिंहान् केसरिणः, न जिगाय न पराजिग्ये । (किन्तु), दृप्ताः दर्पं प्राप्ताः गर्विताः इति यावत् ये अरिवीराः शूराः शत्रवः इत्यर्थः ते एव द्विपाः गजाः तान् दारयति विदलयति इति तथोक्तेन, नैसर्गिकेण निसर्गात् सिद्धेन स्वाभाविकेन इत्यर्थः, पराक्रमेण अपि विक्रमेण च, (सिंहान् जिगाय) ॥ (सिंहानां मध्यमं अतीव कृशं इति प्रसिद्धम् । नलः न केवलं अतिकृशेन स्वमध्येन सिंहान् अतिशिश्ये ; अपि तु विरोधिनृपरूपमत्तगजविदारकेण स्वपराक्रमेणापि, तान् अतिशेते स्म इति भावः) ॥ ३७ ॥

मौर्वीकिणश्यामिकया कृताङ्क-
माजानु दीर्घं भुजयुग्ममस्य ।
विलोकमानः परिपन्थिलोकः
स्वे भाविनि श्रेयसि निःस्पृहोऽभूत् ॥ ३८ ॥

**मौर्वीति** ॥ मौर्वीकिणश्यामिकया मौर्व्याः ज्यायाः धनुर्गुणस्य इति यावत् ('मौर्वी ज्या शिञ्जिनी गुणः ।' इत्यमरः) किणः क्षताङ्कः ज्याघातचिह्नं इति यावत् तस्य श्यामिकया कालिम्ना, कृतः अङ्कः यस्मिन् तत् कृताङ्कं संजातचिह्नं इत्यर्थः, आजानु जानुपर्यन्तं दीर्घं आयतं आजानुलंबि इत्यर्थः, अस्य नलस्य, भुजयुग्मं बाहुयुगलं (कर्म), विलोकमानः निरीक्षमाणः, परिपन्थिलोकः शत्रुसमूहः ('अभियातिपरारातिप्रत्यर्थिपरिपन्थिनः ।' इत्यमरः), भाविनि भविष्यति आगामिनि इति यावत्, स्वे स्वकीये, श्रेयसि क्षेमे सुस्थितिविषये इति अर्थः, निःस्पृहः स्पृहारहितः निरपेक्षः इति यावत्, अभूत् बभूव ॥ ३८ ॥

गाम्भीर्यमब्धिं स्थिरता नगेन्द्रं
प्रभा दिनेशं कमनीयतेन्दुम् ।
अप्येकमेनं निखिलो गुणौघः
परस्परस्पर्धितयेव भेजे ॥ ३९ ॥

गांभीर्यं इति ॥ गंभीरस्य भावः गांभीर्यं गंभीरस्वभावः अगाधता च, अब्धिं समुद्रं, भेजे प्राप । स्थिरस्य भावः स्थिरता स्थैर्यं, नगेन्द्र पर्वतश्रेष्ठं हिमवन्तं इत्यर्थः ('स्थैर्ये च हिमवानिव' इत्युक्तत्वात्) (भेजे) । प्रभा कान्तिः, दिनेशं सूर्यं, (भेजे) । कमनीयता मनोहरत्वं सौम्यत्वं इति यावत्, इन्दु चन्द्रं (भेजे)। (एवं एकैकगुणस्य एकैकः एव आश्रयः आसीत् इति भावः) । एकं अपि, एन नलन्तु, निखिलः समस्तः, गुणौघः गाम्भीर्यादिगुणसमूहः, परस्परस्पर्धितया इव अन्योन्यसङ्घर्षित्वेन इव, भेजे प्राप ॥ (अब्ध्यादौ एकैकस्मिन्नपि गांभीर्यादिः एकैकः एव गुणः दृश्यते । तस्मिन् नले तु समस्तः अपि गुणनिवहः मिलितः दृष्टः इति भावः ॥ ३९ ॥

ततः स्वदोर्दैर्घ्यपरीक्षणाय
कदाचिदभ्याशजुषां मुखेन ।
शस्त्रेण साध्यं पृथिवीन्द्रसूनुः
किंचिद्विधेयं पितरं ययाचे ॥ ४० ॥

ततः इति ॥ ततः यौवनप्रादुर्भावानन्तरं, कदाचित् कस्मिंश्चित् समये, पृथिवीन्द्रसूनुः राजकुमारः नलः, स्वदोर्दैर्घ्यपरीक्षणाय स्वस्य दोष्णोः भुजयोः ('भुजबाहू प्रवेष्टो दोः' इत्यमरः) दैर्घ्यस्य दीर्घत्वस्य वीर्यस्य इत्यर्थः परीक्षणाय परिशोधनाय निजबाहुवीर्यं परीक्षितुं इत्यर्थः, शस्त्रेण आयुधेन ('आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियाम् ।' इत्यमरः), साध्यं साधनीयं निष्पाद्यं इति यावत्, किंचित् किमपि, विधेयं कार्यं (उद्दिश्य), अभ्याशजुषां अभ्याशं समीपं जुषन्ते भजन्ते इति अभ्याशजुषः तेषां तत्समीपवर्तिनां मन्त्र्यादीनां इत्यर्थः, मुखेन द्वारा, पितरं जनकं, ययाचे अभ्यर्थयामास ॥ ४० ॥

अथ क्षितिं वीक्ष्य जितामशेषां
स्वेनैव धाम्ना निषधाधिनाथः ।

दोर्दण्डकण्डूमपनोदयिष्यन्
दिदेश सूनोर्मृगयाविहारम् ॥ ४१ ॥

**अथ इति** ॥ अथ अभ्यर्थनानन्तरं, निषधाधिनाथः निषधेश्वरः वीरसेनः, अशेषां समस्तां, क्षितिं पृथिवीं, स्वेन निजेन, धाम्ना एव तेजसा एव प्रतापेन एव इति यावत्, जितां निर्जितरिपुं इत्यर्थः, वीक्ष्य आलोक्य, सूनोः तनयस्य नलस्य, दोर्दण्डकण्डूं दोषौ दण्डौ इव दोर्दण्डौ बाहुदण्डौ तयोः कण्डूं कण्डूयां ('कण्डूः खर्जूश्च कण्डूया' इत्यमरः) स्ववीर्यप्रकटनस्पृहां इत्यर्थः, अपनोदयिष्यन् निराकरिष्यन् सन्, मृगयाविहारं आखेटक्रीडां ('आखेटो मृगया स्त्रियां' इत्यमरः), आदिदेश अनुजज्ञे मृगयां कर्तुं अनुमेने इत्यर्थः ॥ ४१ ॥

आपांसुकेलि प्रतिपन्नसख्यै-
रुपात्तशस्त्रैः सह मन्त्रिपुत्रैः ।
बिभ्रद्धनुः पार्श्वनिषक्ततूणः
स वाहमारुह्य वनं प्रतस्थे ॥ ४२ ॥

**आपांसुकेलीति** ॥ सः नलः, धनुः चापं, बिभ्रत् वहन्, सन् पार्श्वे पार्श्वभागे निषक्तः निबद्धः तूणः तूणीरं यस्य सः तादृशश्च सन्, आपांसुकेलि पांसुक्रीडायाः आरभ्य प्रतिपन्नं प्राप्तं सख्यं स्नेहः येषां तैः तादृशैः, उपात्तशस्त्रैः उपात्तानि गृहीतानि शस्त्राणि आयुधानि यैः तैः तादृशैः, मन्त्रिपुत्रैः सह सचिवकुमारैः साकं, वाहं अश्वं ('वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः), आरुह्य अधिरुह्य, वनं अरण्यं प्रति, प्रतस्थे प्रययौ ॥ ४२ ॥

पतिः पृथिव्यास्तमनुप्रयातुं
चमूचरानाटविकान्दिदेश ।
स केवलं तान्पितृगौरवेण
न कार्यबुध्यानुचरांश्चकार ॥ ४३ ॥

**पतिः इति** ॥ पृथिव्याः भुवः, पतिः नायकः वीरसेनमहीपतिः इत्यर्थः, तं सुतं, अनुप्रयातुं अनुगन्तुं, अटव्यां चरन्ति इति आटविकाः तान् वनसंचारकुशलान् इत्यर्थः, चम्वां सेनायां चरन्ति इति तान् चमूचरान् योधान्, दिदेश

आदिदेश आज्ञातवान् इति यावत् । सः नलः तु, पितरि गौरवं तेन पितृगौरवेण केवलं स्वपितृवाक्ये गौरवबुद्ध्या एव, तान्, अनुचरान् अनुगन्तॄन्, चकार विदधे । (परं तु), कार्यबुद्ध्या साहाय्यबुद्ध्या, न (चकार) ॥ **उपेन्द्रवज्रा-वृत्तम्** ॥ ४३ ॥

**नेत्राञ्चलैरेव मृगेक्षणानां**
**निपीयमानाननचन्द्रलक्ष्मीः ।**
**पुरीमतिक्रम्य नगोपकण्ठे**
**खेलत्कुरङ्गं स्थलमाससाद ॥ ४४ ॥**

**नेत्राञ्चलैः इति** ॥ (सः), मृगाणां हरिणानां इव ईक्षणे नेत्रे यासां तासां मृगेक्षणानां मृगदृशां अङ्गनानां इति यावत्, नेत्राञ्चलैः नयनोपान्तैः अपाङ्गैः इति यावत्, निपीयमाना सतृष्णं अवलोक्यमाना इत्यर्थः आनन चन्द्रः इव आननचन्द्रः वदनेन्दुः तस्य लक्ष्मीः सौन्दर्यशोभा यस्य सः तादृशः सन् एव, पुरीं स्वनगरीं, अतिक्रम्य अतीत्य, नगोपकण्ठे नगस्य पर्वतस्य (वृक्षस्य वा) उपकण्ठे समीपे, खेलत्कुरंगं खेलन्तः क्रीडन्तः कुरङ्गाः हरिणाः ('मृगे कुरङ्ग-वातायुहरिणाजिनयोनयः ।' इत्यमरः) यस्मिन् तत् तादृशं, स्थलं वनप्रदेशं इत्यर्थः, आससाद उपययौ ॥ ४४ ॥

**तथा स चक्रे भुवि मण्डलानि**
**सव्यापसव्यानि तुरङ्गमेण ।**
**यथा मृगैरप्यनवाप्य मार्गं**
**तन्मध्य एव भ्रमिता व्यधायि ॥ ४५ ॥**

**तथा इति** ॥सः नलः, तुरङ्गमेण अश्वेन, भुवि वनभूमौ, सव्यापसव्यानि प्रदक्षिणाप्रदक्षिणानि, मण्डलानि मण्डलाकारगतीः वर्तुलगतीः इति यावत्; तथा तेन प्रकारेण, चक्रे कृतवान् । यथा येन प्रकारेण, मृगैः अपि हरिणैः अपि, मार्गं बहिर्निर्गमनपथं, अनवाप्य अनासाद्य, तन्मध्ये एव तेषां मण्डलानां मध्ये अभ्यन्तरे एव, भ्रमः अस्य अस्ति इति भ्रमी तस्य भावः भ्रमिता परिभ्रमणशीलत्वं, व्यधायि अकारि ('अन्वभावि' इति पाठे अनुभूयते स्म इत्यर्थः) ॥ ४५ ॥

विहाय तेषां सरणिं स भूयो
हयं तथा तीव्ररयं चकार ।
दूरं प्रयातानपि तानतीत्य
यथा निवृत्तेषुभिराजघान ॥ ४६ ॥

**विहाय इति** ॥ सः नलः, तेषां मृगाणां, सरणिं मार्गं, विहाय मुक्त्वा तान् यथेष्टगतीन् कृत्वा इत्यर्थः, भूयः पुनरपि, हयं स्वतुरगं, तथा तेन प्रकारेण, तीव्ररयं तीव्रः क्षिप्रः रयः वेगः यस्य तं तादृशं, चकार विदधे ; यथा येन प्रकारेण, दूरं बहुदूरं, प्रयातान् अपि विद्रुतान् अपि, तान् तादृशान् मृगान्, अतीत्य अतिक्रम्य, निवृत्तेषुभिः निवृत्तैः प्रत्यागतैः इषुभिः बाणैः, आजघान आहतवान् ॥ ४६ ॥

इतस्ततो विद्रवतां मृगाणां
येषां विषाणानि नलश्चकर्त ।
संरोप्यमाणैर्विशिखैः शिरःसु
पुनः सशृङ्गानिव तांश्चकार ॥ ४७ ॥

**इतः इति** ॥ नलः, इतः ततः सर्वतः इत्यर्थः, विद्रवतां प्रधावतां, येषां, मृगाणां कृष्णसाराणां वनमहिषादीनां वा, विषाणानि शृङ्गाणि, चकर्त चिच्छेद ; तान् तादृशान् मृगान्, शिरस्सु मूर्धसु, संरोप्यमाणैः सम्यक् निखातैः इत्यर्थः, विशिखैः शरैः, पुनः भूयः अपि, सशृङ्गान् इव विषाणसहितान् इव, चकार कृतवान् ॥ ४७ ॥

ततस्तुरङ्गोद्धतधूलिचक्रं
स्थलं परिक्षीणमृगं विहाय ।
अग्रेसरैः कैश्चन कृष्णसारै-
रादिष्टवर्त्मेव वनं स भेजे ॥ ४८ ॥

**ततः इति** ॥ ततः तदनन्तरं, सः नलः, तुरङ्गैः अश्वैः अश्वखुरैः इत्यर्थः उद्धतं उध्दूतं विकीर्णं इति यावत् धूलिचक्रं पांसुपटलं यस्य तत् तादृशं,

(तथा), परिक्षीणाः प्रविनष्टाः शून्यीकृताः' इत्यर्थः मृगाः यस्मिन् तत् तादृशं, स्थलं प्रदेशं, विहाय विसृज्य, अग्रे पुरः सरन्ति इति अग्रेसराः तैः अग्रतः गच्छद्भिः, कैश्चन कैश्चित्, कृष्णसारैः कृष्णेन नीलवर्णेन साराः श्रेष्ठाः कृष्णसाराः तैः हरिणविशेषैः ('कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।' इत्यमरः), आदिष्टवर्त्मा इव आदिष्टं दर्शितं वर्त्म मार्गः यस्य सः तादृशः इव, वनं विपिनं, भेजे प्राप ॥ ४८ ॥

इतः श्लोकद्वयं एकान्वयम् ॥

**कुरङ्गकैः कीर्णनिकुञ्जगर्भं**
**भुजङ्गमैः शंसितभूमिरन्ध्रम् ।**
**शाखामृगैर्लङ्घिततुङ्गशाखं**
**खगैः समासादितपादपाग्रम् ॥ ४९ ॥**

**कुरङ्गकैः इति** ॥ कुरङ्गकैः हरिणैः, कीर्णनिकुंजगर्भं कीर्णः संकुलः निकुञ्जानां लतामण्डपानां ('निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।' इत्यमरः) गर्भः अन्तःप्रदेशः यस्य तत् तादृश, भुजं कुटिलं गच्छन्ति इति भुजङ्गमाः तैः भुजङ्गमैः सर्पैः, शंसितानि सूचितानि भूमिरन्ध्राणि भूविवराणि यस्मिन् तत् तादृशं, (तथा), शाखाचारिणः मृगाः तैः शाखामृगैः वानरैः ('कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।' इत्यमरः), लङ्घिततुङ्गशाखं लङ्घिताः उत्प्लुताः तुङ्गाः उन्नताः शाखाः तरुविटपाः यस्य तत् तादृशं, (तथा), खे आकाशे गच्छन्ति इति तैः खगैः पक्षिभिः, समासादितपादपाग्रं पादैः मूलैः पिबन्ति इति पादपाः तेषां अग्राणि पादपाग्राणि समासादितानि संश्रितानि पादपाग्राणि तरुशिखराणि यस्य तत् तादृशम् ॥ ४९ ॥

**सिंहैः समाक्रान्तदरीविशेषं**
**तरक्षुभिः काङ्क्षितसान्द्रकक्षम् ।**
**विगाह्यमानं परितो नलेन**
**विनीतवत्काननमाबभासे ॥ ५० ॥**

**सिंहैः इति** ॥ सिंहैः केसरिभिः, समाक्रान्तदरीविशेषं समाक्रान्ताः अध्युषिताः दरीविशेषाः गिरिकन्दरविशेषाः यस्य तत् तादृशं ('दरी तु कन्दरो

वा स्त्री ' इत्यमरः), (तथा), तरक्षुभिः मृगादनैः क्षुद्रव्याघ्रविशेषैः इति यावत् ('तरक्षुस्तु मृगादनः ।' इत्यमरः), काङ्क्षितसान्द्रकक्षं काङ्क्षिताः अभिवाञ्छिताः सान्द्राः निबिडाः अविरलाः इति यावत् कक्षाः तृणानि वीरुधः वा यस्य तत् तादृशं (' कक्षौ च तृणवीरुधौ ' इत्यमरः), काननं वनं, नलेन, परितः समन्ततः, विगाह्यमानं सञ्चर्यमाणं सत्, विनीतेन तुल्यं विनीतवत् शमितक्रौर्यं इव, आबभासे आबभौ ॥ ५० ॥

प्रतिस्वनाक्रान्तदिगन्तरेण
ज्याकृष्टिघोषेण गणो मृगाणाम् ।
तमेव सर्वत्र विशङ्कमानः
पाशैर्विना बद्ध इवावतस्थे ॥ ५१ ॥

**प्रतिस्वनेति** ॥ मृगाणां हरिणानां, गणः निवहः, प्रतिस्वनाक्रान्तदिगन्तरेण प्रतिस्वनेन प्रतिध्वानेन आक्रान्तानि आपूरितानि दिशां ककुभां अन्तराणि अभ्यन्तराणि यस्य तेन तादृशेन, ज्याकृष्टिघोषेण ज्यायाः मौर्व्याः आकृष्टिः आकर्षणं तस्याः उत्पन्नः घोषः नादः तेन नलधनुष्टङ्कारशब्देन, सर्वत्र सर्वासु दिक्षु इत्यर्थः, तं नलं एव, विशंकमानः आशंकमानः सन्, पाशैः विना वागुराभिः विना एव, बद्धः इव, नियन्त्रितः इव, अवतस्थे निश्चलः तस्थौ इत्यर्थः ॥ ५१ ॥

प्रवेष्टुकामानिव भीतिवेगात्
क्षितिं मुखैरुल्लिखतो वराहान् ।
फूत्कारघोषेण निवेद्यमानान्
ददर्श दूरादवनीन्द्रसूनुः ॥ ५२ ॥

**प्रवेष्टुकामान् इति** ॥ अवनीन्द्रसूनुः महीपतिपुत्रः नलः, भीतिवेगात् भयाधिक्यात् हेतोः, क्षितिं भुवं, प्रवेष्टुं कामः येषां तान् प्रवेष्टुकामान् इव प्रविविक्षून् इव, मुखैः मुखाग्रैः पोत्रैः इति यावत् (' मुखाग्रे क्रोडहलयोः पोत्रं ' इति अमरः), (क्षितिं), उल्लिखतः विदारयतः, फूत्कारघोषेण फूत्कृतिशब्देन, निवेद्यमानान् सूच्यमानान् प्रकटीक्रियमाणान् इत्यर्थः, वराहान् सूकरान्, दूरात् दूरप्रदेशादेव, ददर्श अवलोकयामास ॥ ५२ ॥

तरस्विना तेन नृपात्मजेन
विकृष्य चापं कुतुकाद्विमुक्तैः ।
नीरन्ध्रमङ्गेषु शरैर्निखातैः
प्रापुः श्रियं शल्लकिनां वराहाः ॥ ५३ ॥

**तरस्विना इति** ॥ वराहाः सूकराः, तरः बलं अस्य अस्ति इति तेन तरस्विना बलवता, तेन, नृपात्मजेन राजकुमारेण नलेन, कुतुकात् कौतुकात् औत्सिक्यात् इति यावत्, चापं धनुः, विकृष्य समाकृष्य, नीरन्ध्रं अविरलं यथा तथा, मुक्तैः निसृष्टैः, अङ्गेषु गात्रेषु, निखातैः प्रवेशितैः, शरैः बाणैः, शल्लकिना सल्लकीनां गजभक्ष्याख्यतरुविशेषाणां ('गजभक्ष्या तु सुवहा सुरभीरसा । महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।' इत्यमरः) ('शल्लकिनां' इति शल्लकिन् शब्द चिन्त्यः), श्रियं शोभां, प्रापुः भेजिरे ॥ ५३ ॥

धनुर्भृता तेन शरो विमुक्तः
शिक्षाविशेषादविशीर्णवेगः ।
प्रदीर्घपङ्क्ति क्वचिदेकपद्या-
मेकोऽपि यूथं विभिदे मृगाणाम् ॥ ५४ ॥

**धनुर्भृता इति** ॥ धनुर्भृता धानुष्केण, तेन नलेन, विमुक्तः विसृष्टः, शिक्षाविशेषात् विशेषपरिचयात् हेतोः, अविशीर्णवेगः अविशीर्णः अपरिक्षीण. वेगः रयः यस्य सः तादृशः, शरः बाणः, एकः अपि एकः एव सन् अपि, क्वचित् कुत्रचित्, एकपद्यां एकपुरुषमात्रसंचारयोग्ये मार्गे, प्रदीर्घपङ्क्ति प्रदीर्घा अत्यायता पङ्क्तिः श्रेणिः यस्य तत् तादृशं, मृगाणां हरिणानां, यूथं कुल, बिभिदे भिनत्तिस्म आजघान इति यावत् ॥ ५३ ॥

वाहद्विषां निष्पततां पुरस्ता-
द्विषाणचक्रं स तथा चकर्त ।
अभ्याशभाजोऽपि विलोक्य वाहान्
क्लेषं यथैते सफलं न कुर्युः ॥ ५५ ॥

**वाहद्विषां इति** ॥ सः नलः, पुरस्तात् अग्रतः अभिमुखं इति यावत्, निष्पततां निष्क्रामतां, वाहानां अश्वानां द्विषः शत्रवः वाहद्विषः तेषां वाहद्विषां महिषाणां ('लुलायो महिषो वाहद्विषत्कासरसैरिभाः।' इत्यमरः), विषाणचक्रं शृंगसंचयं चक्राकाराणि शृङ्गाणि वा, तथा तेन प्रकारेण, चकर्त चिच्छेद; यथा येन प्रकारेण, एते वाहद्विषः, अभ्याशभाजः अपि स्वसमीपवर्तिनः अपि, वाहान् अश्वान्, विलोक्य निरीक्ष्य, द्वेषं वैरं, सफलं सप्रयोजनं, न कुर्युः न विदध्युः ॥ ५५ ॥

**स बाणवर्त्मन्यपि वर्तमानान्**
**कपीनमुञ्चत्करुणार्द्रचेताः ।**
**संरक्षतः स्वावयवानुपेक्ष्य**
**कण्ठेषु डिम्भानवलम्बमानान् ॥ ५६ ॥**

**सः इति** ॥ करुणार्द्रचेताः करुणया कृपया आर्द्रं क्लिन्नं पूर्णं इत्यर्थः चेतः मनः यस्य सः तादृशः, सः नलः, कण्ठेषु गलेषु, अवलंबमानान् विलग्नान्, डिंभान् शिशून्, स्वावयवान् निजशरीराणि अपि, उपेक्ष्य, अवगणय्य, संरक्षतः पालयतः, कपीन् वानरान्, बाणवर्त्मनि निजशरपथे, वर्तमानान् अपि, स्थितान् अपि, अमुञ्चत् पर्यहरत् न हिंसितवान् इत्यर्थः ॥ ५६ ॥

**निकुञ्जलीनः क्षुधितस्तरक्षु-**
**र्विक्रम्य जग्राह मृगं न यावत् ।**
**नृपात्मजस्तावदुपेत्य वेगा-**
**दुद्ग्रथ्य कुन्तेन तमुद्बभार ॥ ५७ ॥**

**निकुञ्जेति** ॥ क्षुधितः बुभुक्षितः क्षुधापीडितः इति यावत्, (अतः एव), निकुंजलीनः निकुंजे लतागुल्मे लीनः संछन्नः, तरक्षुः मृगादनः, विक्रम्य विक्रमं कृत्वा, यावत् यावता कालेन इत्यर्थः, मृगं हरिणं, न जग्राह न गृहीतवान्; तावत् तावता कालेन, नृपात्मजः राजकुमारः नलः, वेगात् जवेन, उपेत्य उपागम्य, कुन्तेन प्रासायुधेन, तं तरक्षुं मृगं वा, उद्ग्रथ्य उद्गन्ध्य निर्भिद्य इति यावत्, उद्बभार उत्क्षिप ॥ ५७ ॥

अलक्षितः क्वापि जवातिरेका-
चमूचरैः सान्द्रमहीरुहेषु ।
भ्रमन्वनान्तेषु मृगानुसारी
पद्माकरं कश्चिदसौ ददर्श ॥ ५८ ॥

**अलक्षितः इति** ॥ असौ नलः, जवातिरेकात् वेगातिशयात् हेतोः, चमूचरैः स्वयोधैः, क्वापि कुत्रापि, अलक्षितः अनवलोकितः सन्, मृगान् अनुसरति इति मृगानुसारी अनुसृतमृगः, सान्द्रमहीरुहेषु सान्द्राः निबिडाः मह्यां रोहन्ति इति महीरुहाः वृक्षाः येषु तेषु तादृशेषु, वनान्तेषु विपिनोपान्तेषु, भ्रमन पर्यटन् सन्, कंचित् कमपि, पद्माकरं कमलाकर तटाकं इति यावत् ('पद्माकरस्तटाकोऽस्त्री' इत्यमरः), ददर्श ईक्षांचक्रे ॥ ५८ ॥

किञ्चिन्निपीतक्रमवारिबिन्दुः
सरोजसंसर्गवतानिलेन ।
स तस्य तीरे सुखसुप्तहंसे
नरेन्द्रसूनुः सुचिरं चचार ॥ ५९ ॥

**किंचिदिति** ॥ सः, नरेन्द्रसूनुः नृपतनयः नलः, सरोजसंसर्गवता सरसि जायन्ते इति सरोजानि तेषां संसर्गः संपर्कः अस्य अस्ति इति तेन तादृशेन, अनिलेन वायुना मन्दमारुतेन इत्यर्थः, क्रमेन उत्पन्नानि वारीणि क्रमवारीणि श्रमजलानि स्वेदजलानि इत्यर्थः तेषां बिन्दवः पृषताः ('पृषन्ति बिन्दुपृषताः' इत्यमरः) लवाः इत्यर्थः किंचित् ईषत् निपीताः शोषिताः इत्यर्थः क्रमवारिबिन्दवः यस्य सः तादृशः सन्, सुखसुप्तहंसे सुखेन सुप्ताः निद्रिताः हंसाः यस्मिन् तस्मिन् तादृशे, तस्य पद्माकरस्य, तीरे तटे, सुचिरं बहुकालं, चचार संचरितवान् ॥ ५९ ॥

मुखे प्रियायाः प्रणयानुबन्धा-
द्वालं मृणालाङ्कुरमर्पयन्तम् ।
सरोजिनीपत्रनिषण्णमेकं
हिरण्मयं हंसमसौ ददर्श ॥ ६० ॥

**मुखे इति** ॥ असौ नलः, प्रणयानुबन्धात् प्रणयस्य प्रीत्याः अनुबन्धः सश्लेषः तस्मात् प्रेमाधिक्यवशात् हेतोः इत्यर्थः, प्रियायाः सहचर्याः हंस्याः इत्यर्थः, मुखे वदनकुहरे चंचूपुटे इत्यर्थः, बालं अतिकोमलं इत्यर्थः, मृणालाङ्कुरं मृणालस्य बिसस्य ('मृणालं बिसमब्जादि' इत्यमरः) अङ्कुरः प्ररोहः तं, अर्पयन्तं ददानं, सरोजिन्याः नलिन्याः पत्रेषु दलेषु निषण्णं उपविष्टं, एकं कञ्चित्, हिरण्मय सुवर्णमय, हंम मरालं, ददर्श अवालोकयत् ॥ ६० ॥

**तं धारयिष्यन्नविपन्नमेव**
**संमोहनास्त्रं स समाददे च ।**
**लताश्रितानां वनदेवतानां**
**शुश्राव वाक्यं च मनोज्ञमेतत् ॥ ६१ ॥**

**तं इति** ॥ मः च नलश्च, त हंसं, अविपन्नमेव अहिंसितमेव, धारयिष्यन् ग्रहीष्यन ग्रहीतुकामः सन् इत्यर्थः, संमोहनास्त्रं ममोह्यन्ते जनाः अनेन इति मंमोहन तत् च तत् अस्त्रं च मोहोत्पादकं बाणविशेष, समाददे करे जग्राह । लताश्रितानां लताधिष्ठितानां, वनदेवतानां अरण्याधिष्ठानदेवतानां, मनोज्ञं मञ्जुल हृदयङ्गम इति यावत, एतत् वक्ष्यमाणं, वाक्यं वचनं अशरीरिवचनं इत्यर्थः, शुश्राव च आकर्णितवान च ॥ (अत्र चकारौ तदस्त्रसमादानवनदेवतावचनश्रवणयोः अविलंबार्थौ) ॥ ६१ ॥

**चापादपाकृष्य नरेन्द्रसूनो**
**शिलीमुखं तूणमुखे निधेहि ।**
**संपादयिष्यत्ययमीप्सितं यत्**
**तवानुरूपं तनुरूपलक्ष्म्याः ॥ ६२ ॥**

**चापात् इति** ॥ "नरेन्द्रसूनो हे नृपकुमार, शिलीमुखं बाणं ('अलिबाणौ शिलीमुखौ' इत्यमरः), चापात् कार्मुकात्, अपाकृष्य निगृह्य, तूणस्य मुख तस्मिन् तूणमुखे तूणीरान्तः, निधेहि निवेशय प्रक्षिप इति यावत् । यत् यस्मात् कारणात्, अयं एषः हंसः, तव ते, तनुरूपलक्ष्म्याः तनोः अवयवस्य रूपलक्ष्मीः सौन्दर्यसमृद्धिः तस्याः, अनुरूपं सदृशं, आप्तुं इष्टं ईप्सितं अभिलषितं, संपादयिष्यति साधयिष्यति ॥ ६२ ॥

ततस्तदाकर्ण्य वचः कुमारः
सविस्मयं तद्विदधे तथैव ।
उपेत्य हंसः सुविदूर एव
निषेदिवानित्थमुदाजहार ॥ ६३ ॥

**ततः इति** ॥ ततः अनन्तरं, कुमारः नृपसुतः नलः, तत् तादृशं, वचः अशरीरिवचनं, आकर्ण्य श्रुत्वा, सविस्मयः विस्मयेन सहितः सन् ('सविस्मयं' इति पाठे आश्चर्यसहितं यथा तथा), तथा एव तद्वचनप्रकारेणैव, तत् चापापाकर्षणं, विदधे चक्रे । हंसः श्वेतगरुत् च ('हंसास्तु श्वेतगरुतः' इत्यमरः), उपेत्य नलं उपगम्य, सुविदूरे एव सुतरां दूरतः एव, निषेदिवान् निषण्णः उपविष्टः सन् इत्यर्थः ('भाषायां सदवसश्रुवः' इति निपूर्वकषदिल् धातोः क्वसुप्रत्ययः), इत्थं एवं वक्ष्यमाणप्रकारं, उदाजहार व्याजहार उवाच इति यावत् ॥ **उपेन्द्रवज्रावृत्तम्** ॥ ६३ ॥

मधुद्विषो नाभिसरोजजन्मा
निर्माणशिल्पी जगतां त्रयाणाम् ।
त्रयीलतोन्मीलनमूलकन्दः
करोतु देवस्तव मङ्गलानि ॥ ६४ ॥

**मधुद्विषः इति** ॥ मधोः मधुनामकासुरस्य द्विट् शत्रुः तस्य मधुद्विषः विष्णोः ('पद्मनाभो मधुरिपुः' इत्यमरः), नाभिसरोजजन्मा नाभौ नाभिप्रदेशे स्थित यत् सरोजं पद्मं तत्र जन्म उत्पत्तिः यस्य सः तादृशः, त्रयाणां, जगतां भुवनानां भुवनत्रयस्य इत्यर्थः, निर्माणशिल्पी निर्माणे सर्जनविषये शिल्पी कारुः ('कारुः शिल्पी' इत्यमरः) जगत्त्रयनिर्माता इत्यर्थः, (तथा), त्रयी त्रिवेदी एव लता वल्ली तस्याः उन्मीलनं उदयः आविर्भावः इति यावत् तस्य मूलकन्दः मूलकारणं लोके वेदानां प्रथमप्रवृत्तिहेतुभूतः इत्यर्थः, देवः ब्रह्मदेवः, तव ते, मङ्गलानि कल्याणानि शुभानि इति यावत्, करोतु विदधातु ॥ ६४ ॥

त्रैलोक्यभर्तुः कमलासनस्य
विमानधुर्याधिपतित्वलाभात्

सयक्षरक्षःसुरकिन्नरेषु
लोकेषु पूज्या मम तातपादाः ॥ ६५ ॥

**त्रैलोक्येति** ॥ मम मे, तातपादाः तातमिश्राः पूज्यः जनकः इत्यर्थः (पादशब्दः अत्र पूज्यवाचकः), त्रैलोक्यभर्तुः त्रयः लोकाः त्रैलोक्यं त्रिभुवनं तस्य भर्तुः नाथस्य, कमलं आसनं यस्य तस्य कमलासनस्य ब्रह्मणः ('विरिञ्चिः कमलासनः' इत्यमरः), धुरं भारं वहन्ति इति धुर्याः धूर्वहाः भारवाहिनः इत्यर्थः ('धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः ।' इत्यमरः) विमानधुर्याः विमानं व्योमयानं तस्य धुर्याः वाहकाः तेषां अधिपतिः अध्यक्षः मुख्यः इत्यर्थः तस्य भावः विमानधुर्याधिपतित्वं तस्य लाभः प्राप्तिः तस्मात् हेतोः, सयक्षरक्षस्सुरकिन्नरेषु यक्षाश्च रक्षांसि च सुराश्च किन्नराश्च तैः सह वर्तन्ते इति तेषु तादृशेषु, लोकेषु भुवनेषु, पूजयितुं योग्याः पूज्याः पूजार्हाः, (सन्ति) ॥ ६५ ॥

स्वकर्म मां शिक्षयता विमाने
पित्रा नियुक्तं क्षणमप्यवेक्ष्य ।
निजासनाम्भोरुहकेसरैर्मे
श्रमापनोदं कुरुते विरिञ्चिः ॥ ६६ ॥

**स्वकर्म इति** ॥ मां मह्यं इत्यर्थः, स्वस्य कर्म स्वकर्म ब्रह्मविमानवहनरूपं निजकृत्यं, शिक्षयता अभ्यासयता, पित्रा मम जनकेन, विमाने व्योमयाने, क्षणमपि किञ्चित्कालमपि, नियुक्तं नियोजितं अधिकृतं इति यावत्, अवेक्ष्य दृष्ट्वा, विरिञ्चिः ब्रह्मा ('विरिञ्चिः कमलासनः' इत्यमरः). निजासनांभोरुहकेसरैः निजं स्वकीयं यत् आसनरूपं अंभोरुहं पद्मं तस्य केसरैः किञ्जल्कैः, मे मम, श्रमापनोदं श्रमस्य विमानभारवहनजनितक्लमस्य अपनोदं अपनयनं दूरीकरणं इति यावत्, कुरुते विदधाति ॥ (निजासनपद्मकिञ्जल्कैः स्वविमानवहनपरिश्रान्तं मां वीजयति इति भावः) ॥ ६६ ॥

स्नानोन्मुखीनां सुरसुन्दरीणां
काश्मीरपङ्कैः परिपिञ्जरेषु ।

अदूरमन्दारतरुप्रसूनैः
समीरमुक्तैः सुरभीकृतेषु ॥ ६७ ॥

वक्ष्यमाणं श्लोकद्वयं एकान्वयम् ॥

**स्नानेति** ॥ (अहं), स्नानोन्मुखीनां स्नानं कर्तुं उद्युक्तानां इत्यर्थः, सुरसुन्दरीणां देवस्त्रीणां, काश्मीरपङ्कैः कुङ्कुमकर्दमैः कुङ्कुमलेपैः इति यावत्, परिपिञ्जरेषु अरुणितेषु, (तथा), समीरमुक्तैः समीरेण वायुना मुक्तानि पातितानि तैः, अदूरमन्दारतरुप्रसूनैः अदूरे समीपे स्थिताः ये मन्दारतरवः कल्पकतरुविशेषाः तेषां प्रसूनानि कुसुमानि तैः, सुरभीकृतेषु सुगन्धीकृतेषु परिमलितेषु इति यावत् ॥ ६७ ॥

दिक्कुञ्जराणामविरामपातै-
र्मदाम्बुभिः कर्बुरितोदरेषु ।
चरामि सार्धं सहचारिणीभिः
स्वर्गापगायाः पुलिनान्तरेषु ॥ ६८ ॥

**दिगिति** ॥ (तथा) अविरामपातैः अविरामं अविरतं यथा तथा सन्ततं इति यावत् (अविरामः अविरतः वा) पातः पतनं येषां तानि तैः तादृशैः सन्ततं स्रवद्भिः इत्यर्थः, दिक्कुञ्जराणां दिशागजानां, मदांबुभिः मदजलैः, कर्बुरितोदरेषु कर्बुरितं शबलीकृतं नानावर्णीकृतं इत्यर्थः उदरं मध्यप्रदेशः येषां तानि तादृशेषु, स्वर्गापगायाः स्वर्गे स्थिता आपगा नदी स्वर्गापगा तस्याः सुरनद्याः आकाशगङ्गायाः इत्यर्थः, पुलिनान्तरेषु सैकतप्रदेशेषु इत्यर्थः, सहचारिणीभिः सार्धं सहचरीभिः हंसीभिः सह, चरामि पर्यटामि ॥ ६८ ॥

कौमारमारभ्य सुताः सुराणां
जयन्तमुख्या अपि बद्धसख्याः ।
तथापि भूयांस्तव दर्शनोत्थ-
श्चित्तेऽपि संमाति न मे प्रमोदः ॥ ६९ ॥

**कौमारं इति** ॥ जयन्तमुख्याः जयन्तः तदाख्यः देवेन्द्रसुतः ('जयन्तः पाकशासनिः' इत्यमरः) मुख्यः आद्यः येषां ते तादृशाः, सुराणां देवानां,

सुताः अपि तनयाः अपि, कौमार आरभ्य बाल्यात् प्रभृति, (मया), बद्धसख्याः सख्युः भावः सख्यं बद्धं कृतं इत्यर्थः सख्यं स्नेहः यैः ते तादृशाः, (सन्ति)। तथापि, तव ते, दर्शनोत्थः दर्शनेन उत्पन्नः, भूयान् अत्यधिकः, प्रमोदः सन्तोषः, मे मम, चित्ते अपि मनसि अपि, न संमाति पर्याप्त अवकाशं न लभते इत्यर्थः ॥ ६९ ॥

न मानसे नैव सुमेरुशृङ्गे
न नन्दने नापि गृहे विरिञ्चेः ।
न क्वापि गन्तुं वलते मनो मे
त्वया सनाथामवनीं विहाय ॥ ७० ॥

**न इति** ॥ मे मम, मनः चित्तं, त्वया भवता, नाथेन सह वर्तते इति तां सनाथां नाथवतीं, अवनीं पृथ्वीं मर्त्यलोक इत्यर्थः, विहाय विसृज्य, मानसे हंसावासभूते मानसाख्ये सरसि इत्यर्थः, गन्तुं, न वलते न त्वरते न उत्सुकं भवति इत्यर्थः; सुमेरुशृङ्गे सुमेरोः सुरालयभूतस्य हेमाद्रेः ('मेरुः सुमेरुर्हेमाद्रिः रत्नसानुः सुरालयः' इत्यमरः) शृङ्गे शिखरे अपि, नैव (वलते); नन्दने नन्दनाख्ये इन्द्रोद्याने अपि ('नन्दनं वनम्' इत्यमरः), न (वलते); विरिञ्चेः ब्रह्मणः, गृहे अपि सदने अपि मर्त्यलोके अपि इत्यर्थः, न (वलते); क्वापि कुत्रापि, (गन्तुं), न (वलते) ॥ ७० ॥

सख्यं त्वया साधयितुं ततो मां
स्पृहातिरेकस्तरलीकरोति ।
पुष्पेषुपुष्पाकरयोरिवास्तु
तदावयोः स्याद्यदि कौतुकं ते ॥ ७१ ॥

**सख्यं इति** ॥ ततः तस्मात् कारणात् त्वया भवता सह, सख्यं स्नेहं मैत्रीं इति यावत्, साधयितुं निर्वर्तयितुं कर्तुं इत्यर्थः, स्पृहातिरेकः स्पृहायाः वाञ्छायाः अतिरेकः अतिशयः आधिक्यं इति यावत्, मां, तरलीकरोति तरलयति चपलीकरोति इत्यर्थः। ते तव, कौतुकं अस्मन्मैत्रीकरणे औत्सुक्यं, स्यात् यदि भवेत् चेत्, (तर्हि), पुष्पेषुपुष्पाकरयोः इव पुष्पाणि एव इषवः

यस्य सः पुष्पेषुः कुसुमबाणः मन्मथः इति यावत् पुष्पाणां आकरः पुष्पाकरः वसन्तः तयोः इव, आवयोः, तत् तादृशं, सख्यं अस्तु भवतु ' ॥ ७१ ॥

ततः समास्थाय स मौनबन्धं
मन्दाकिनीपुष्करगन्धभाजा ।
अमार्जयत्पक्षपुटानिलेन
तदङ्गलग्नानि रजांसि हंसः ॥ ७२ ॥

**ततः इति** ॥ ततः भाषणानन्तरं, सः, हंसः मरालः, मौनबन्ध मौनमुद्रां तूष्णींभावं इत्यर्थः, समास्थाय अवलम्ब्य अङ्गीकृत्य इत्यर्थः, मन्दाकिनी आकाशगङ्गा तस्याः पुष्कराणि पद्मानि (' बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ।' इत्यमरः) तेषां गन्धः सौरभं तं भजति इति तेन तादृशेन, पक्षपुटानिलेन पक्षपुटयोः गरुतोः अनिलेन वायुना, तदङ्गलग्नानि तस्य नलस्य अङ्गेषु अवयवेषु लग्नानि स्थितानि, रजांसि पांसून् भूधूलीः इति यावत्, अमार्जयत् अशोधयत् अपनीतवान् इत्यर्थः ॥ ७२ ॥

भवादृशानां मनुजेषु सख्यं
मनोरथानामपि दूरवर्ति ।
तदद्य संपादयतो विधातु-
रहेतुकोऽयं मयि पक्षपातः ॥ ७३ ॥

**भवादृशानां इति** ॥ ' मनुजेषु मनुष्येषु विषये, भवादृशानां त्वादृशानां, सख्यं सखित्वं स्नेहः इति यावत्, मनोरथानां अपि संकल्पानां अपि कामानां अपि इति यावत्, दूरे वर्तते इति दूरवर्ति अतिदुर्लभत्वात् मनसा चिन्तयितुं अपि असाध्यं इत्यर्थः । तत् तादृशं भवत्सख्यं, अद्य संप्रति संपादयतः उत्पादयतः कारयतः इति यावत्, विधातुः विधेः, मयि मम विषये इत्यर्थः, अयं एषः, पक्षपातः आदरः स्नेहः इति यावत्, अहेतुकः निर्हेतुकः यादृच्छिकः इति यावत्, (भवति) ॥ **उपेन्द्रवज्रावृत्तम्** ॥ ७३ ॥

मृगार्थमित्थं भ्रमतो वनेषु
दैवादभूद्यस्त्वयि सख्यबन्धः ।

स एष पाषाणकणाञ्जिघृक्षोः
करोदरे मौक्तिकपुञ्जपातः ॥ ७४ ॥

**मृगार्थे इति** ॥ मृगार्थे मृगयाविहारार्थे इत्यर्थः, इत्थं एवं, वनेषु अरण्येषु, भ्रमतः पर्यटतः, ( मे ), दैवात् अदृष्टवशात्, त्वयि भवद्विषये, यः, सख्यबन्धः स्नेहानुबन्धः, आसीत् अजायत ; सः तादृशः, एषः अयं सख्यबन्धः, पाषाणानां अश्मनां कणाः शकलानि तान् पाषाणकणान् शिलाशकलानि (' पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।' इत्यमरः ), ग्रहीतुं इच्छुः जिघृक्षुः तस्य जिघृक्षोः आदित्सोः ग्रहीतुं इच्छतः जनस्य इत्यर्थः, करस्य उदरं तस्मिन् करोदरे हस्ताभ्यन्तरे, मौक्तिकपुञ्जपातः मौक्तिकानां मुक्तामणीनां यत् पुञ्जं सञ्चयः तस्य पातः पतनं अधिगमः मुक्ताफलप्राप्तिसदृशः भवति इत्यर्थः ॥ ७४ ॥

अद्य प्रभृत्येव सखा त्वमेकः
प्रेमास्पदं स्वादपि जीवितान्मे ।
इति ब्रुवन्नेव नरेन्द्रसूनुः
करेण कण्ठे खगमाममर्श ॥ ७५ ॥

**अद्य इति** ॥ अद्य प्रभृति अस्मात् दिनात् आरभ्य, त्वं एकः एव भवान् एकः केवलं (न तु अन्यः कश्चित् इत्यर्थः), स्वात् स्वकीयात् मदीयात् इत्यर्थः जीवितात् प्राणेभ्यः अपि, प्रेमास्पदं प्रेम्णः स्नेहस्य आस्पद स्थानं अत्यन्तप्रीतिभाजनं इत्यर्थः, मे मम, सखा वयस्यः मित्रं इति यावत्, (भवसि)।' इति एव, नरेन्द्रसूनुः नृपकुमारः नलः, ब्रुवन् एव वदन् सन् एव, करेण स्वपाणितलेन, खगं विहगं हंसं इत्यर्थः, कण्ठे ग्रीवायां, आममर्श परामृष्टवान् ॥ ७५ ॥

इत्थं प्रसादाभिमुखेन धात्रा
निर्यत्नमावर्जितसख्यबन्धौ ।
तौ तस्थतुस्तत्र मुहूर्तमात्रं
परस्पराभाषणकौतुकेन ॥ ७६ ॥

**इत्थं इति** ॥ प्रसादाभिमुखेन अनुग्रहोन्मुखेन, धात्रा विधिना दैवेन इति यावत्, इत्थं एवं, निर्यत्नं प्रयत्नं विनैव निर्हेतुकं यथा तथा इति यावत्,

आवर्जितसख्यबन्धौ आवर्जितः उत्पादितः इत्यर्थः सख्यबन्धः स्नेहानुबन्धः ययोः तौ तादृशौ, तौ नलहंसौ, परस्पराभाषणकौतुकेन अन्योन्यालापप्रीत्या, तत्र सरस्तीरे, मुहूर्तमात्रं क्षणमात्रं, तस्थतुः स्थितवन्तौ ॥ ७६ ॥

**स्वस्त्यस्तु ते संप्रति साधयामि**
**निवेदितं यद्वनदेवताभिः ।**
**संतर्पयिष्यामि दृशौ वयस्य**
**भूयस्तवालोकरसायनेन ॥ ७७ ॥**

**स्वस्ति इति** ॥ 'वयस्य हे सखे, ते तुभ्यं, स्वस्ति मङ्गलं, अस्तु भवतु । सम्प्रति अधुना, वनदेवताभिः, यत्, निवेदितं 'संपादयिष्यत्ययमीप्सित यस्त वानुरूपं तनुरूपलक्ष्म्याः' इत्येव प्रकारेण उक्त; (तत्), साधयामि निर्वर्तयामि । भूयः पुनरपि, तव भवतः, आलोकरसायनेन आलोकः दर्शनं रसायन इव तेन त्वद्दर्शनामृतेन इत्यर्थः ('नीरसाना हि धातूनां लाभोपायो रसायन' इति रसायनं) रसायनवत् अत्यन्ताप्यायनकरेण त्वद्दर्शनेन इति भावः, दृशौ मम नयने, सन्तर्पयिष्यामि सम्यक् प्रीणयिष्यामि भूयोऽपि त्वां द्रक्ष्यामि इति भावः ॥ ७७ ॥

**जाता दिनश्रीर्जरती तदेष**
**गृहाननुपैतुं समयस्तवापि ।**
**इत्थं वचः कर्णपथाभिराम-**
**मुदीर्य हंसो वियदुत्पपात ॥ ७८ ॥**

**जाता इति** ॥ दिनश्रीः दिनस्य दिवसस्य श्रीः शोभा, जरती जीर्णा, जाता अभवत् इत्यर्थः (सन्ध्यासमयः प्रवृत्तः इत्यर्थः) । तत् तस्मात् हेतोः, तव अपि भवतः च, गृहान् निजवसतिं ('गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ।' इत्यमरः) उपैतुं उपगन्तुं, एषः अयं, समयः उचितः कालः, (अस्ति)'। इत्थं एवं, कर्णयोः पन्थाः कर्णपथः कर्णपथस्य अभिरामं कर्णपथाभिरामं श्रवणमनोहरं श्र...न्तश्राव्य इत्यर्थः, वचः वचनं, उदीर्य उक्त्वा, हंसः मानसौकाः, वियत् आकाशं ('वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ।' इत्यमरः), उत्पपात उड्डिड्ये ॥ ७८ ॥

अतीतदृग्वर्त्मनि हेमहंसे
क्रमादुपेतेषु चमूचरेषु ।
शरीरमात्रेण पुरं प्रतस्थे
नलोऽन्वगच्छन्मनसा तमेव ॥ ७९ ॥

**अतीतेति** ॥ हेमहंसे स्वर्णहंसे, अतीतदृग्वर्त्मनि दृशोः नेत्रयोः वर्त्म मार्गः तत् अतीतः (अतीतं दृग्वर्त्म येन सः इति वा) अतीतदृग्वर्त्मा तस्मिन् अतीतदृग्वर्त्मनि नयनविषयं अतिक्रान्ते सति इत्यर्थः, (तथा), चमूचरेषु सैनिकेषु च, क्रमात् क्रमशः कालक्रमेण इत्यर्थः, उपेतेषु निजसमीपं उपगतेषु सत्सु, नलः, पुरं स्वनगरीं, शरीरमात्रेण देहेनैव केवलं, प्रतस्थे प्रस्थितवान् । मनसा हृदयेन तु, तं हंस एव, अन्वगच्छत् अनुससार ॥ हंसानुगतमनस्कत्वात् शून्यहृदय एव पुरं ययौ इति भावः ॥ **उपेन्द्रवज्रावृत्तम्** ॥ ७९ ॥

प्रेम्णाह्वयन्तीमिव दीर्घदीर्घैः
प्रदोषशङ्खध्वनिभिर्विदूरात् ।
सन्ध्यांशुदम्भादनुबद्धरागां
नलः प्रपेदे कुलराजधानीम् ॥ ८० ॥

**प्रेम्णा इति** ॥ नलः, सन्ध्यांशुदंभात् सन्ध्याकाले विद्यमानाः ये अंशवः सूर्यकिरणाः तेषां दंभात् व्याजात् सन्ध्यारक्तातपव्याजात् इत्यर्थः, अनुबद्धरागां उत्पन्नानुरागां, (अतः एव), दीर्घदीर्घैः अत्यन्तदीर्घैः अतिगंभीरैः इत्यर्थः, प्रदोषशंखध्वनिभिः सन्ध्याकालावेदकशंखनादैः (करणैः), विदूरात् अतिदूरात् एव, प्रेम्णा अत्यन्तप्रीत्या, ह्वयन्तीं (आह्वयन्तीं वा) इव आकारयन्तीं इव आह्वानं कुर्वतीं इव स्थितां इत्यर्थः, कुलराजधानीं कुलक्रमागतां निजप्रधाननगरीं, प्रपेदे आससाद ॥ ८० ॥

तदद्भुतं तस्य वनान्तवृत्तं
सुहृत्सु शंसत्सु परस्परेण ।
स्मरन्मुहुः स्वर्णविहङ्गमस्य
निशामनैषीन्निषधेन्द्रसूनुः ॥ ८१ ॥

**तत् इति** ॥ सुहृत्सु तस्य मित्रेषु, अद्भुतं आश्चर्यकरं, तत् तादृशं, तस्य नलस्य, वनान्तवृत्तं वनान्ते अरण्यमध्ये प्रवृत्तं यत् वृत्तं दिव्यहंससख्यरूपः वृत्तान्तः तत्, परस्परेण अन्योन्यं, शंसत्सु कथयत्सु सत्सु, निषधेन्द्रसूनुः निषधराजकुमारः नलः, स्वर्णविहङ्गमस्य स्वर्णमयहंसपक्षिणः स्वर्णहंसं इत्यर्थः ("अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी), मुहुः पुनः पुनः, स्मरन् उत्कण्ठापूर्वकं चिन्तयन् सन् एव, निशां रात्रिं, अनैषीत् गमयामास ॥ **उपेन्द्रवज्रावृत्तम्** ॥

**वनेषु तस्याचरितं चरेण**
**विज्ञाय राज्ञो भृशमुत्सुकस्य ।**
**प्रत्यूषकृत्यं विधिवद्विधाय**
**मूर्ध्ना ववन्दे चरणौ कुमारः ॥ ८२ ॥**

**वनेषु इति** ॥ कुमारः राजसुतः नलः, प्रत्यूषे प्रभाते कर्तव्य कृत्य कर्म प्रत्यूषकृत्य प्रातस्सन्ध्यावन्दनादिकं इत्यर्थः, विधिवत् यथाविधि, विधाय कृत्वा, (अनन्तरं), वनेषु अरण्येषु, तस्य स्वस्य इत्यर्थः, आचरितं दिव्यहंससख्यरूपं कृत्यं, चारेण चारमुखात् इत्यर्थः, विज्ञाय विदित्वा, भृश अत्यन्त, उत्सुकस्य उत्कण्ठितस्य स्वपुत्रदर्शनाकाङ्क्षिणः इत्यर्थः, राज्ञः पितुः वीरसेननृपतेः, चरणौ पादौ, मूर्ध्ना शिरसा, ववन्दे ननाम ॥ ८२ ॥

**अथाभिनन्द्यात्मजमादरेण**
**दोर्भ्यां परिष्वज्य पतिः पृथिव्याः ।**
**मौलेष्वमात्येषु दृशौ निवेश्य**
**प्रमोदबाष्पाकुलमित्युवाच ॥ ८३ ॥**

**अथ इति** ॥ अथ पुत्रवन्दनानन्तरं, पृथिव्याः पतिः भूपतिः, आत्मज स्वतनयं, अभिनन्द्य प्रशस्य, आदरेण प्रीत्या प्रीतिपूर्वं इत्यर्थः, दोर्भ्यां बाहुभ्यां, परिष्वज्य आलिङ्ग्य, मूलात् आगताः (मूले भवाः वा) तेषु मौलेषु अन्वयागतेषु आप्तेषु इत्यर्थः, अमात्येषु मन्त्रिषु, दृशौ नेत्रे स्वनयनयुगं इत्यर्थः, निवेश्य निक्षिप्य तान् निरीक्ष्य इत्यर्थः, प्रमोदबाष्पाकुलं प्रमोदेन हर्षभरेण उत्पन्नानि यानि बाष्पाणि अश्रूणि तैः आकुलं परिप्लुतं यथा तथा आनन्दबाष्पगद्गद यथा तथा इत्यर्थः, इति वक्ष्यमाणप्रकारेण, उवाच अवदत् ॥ ८३ ॥

गुणैरुदारैर्विनयावतंसै-
निरस्तसाम्येन भुजौजसा च ।
आरोपितोऽहं धुरि पुत्रभाजां
वत्स त्वयाविष्कृतपौरुषेण ॥ ८४ ॥

**गुणैः इति** ॥ ' वत्स हे पुत्रक, उदारैः उत्तमैः, विनयः प्रह्वता एव अवतंसः शिरोभूषणं येषां तैः विनयावतंसैः विनयभूषितैः इत्यर्थः, गुणैः सौशील्यादिभिः, (तथा), भुजौजसा भुजयोः ओजः पराक्रमः तेन भुजौजसा बाहुवीर्येण च, निरस्तं दूरीकृतं साम्यं समत्वं येन तेन निरस्तसाम्येन निरुपमेन, (तथा), आविष्कृतपौरुषेण आविष्कृतं प्रकटीकृतं पौरुषं पराक्रमः येन तेन तादृशेन, त्वया भवता, अहं, पुत्रभाजां पुत्रिणां सत्पुत्रवतामित्यर्थः, धुरि अग्रे, आरोपितः प्रतिष्ठापितः, (अस्मि) ॥ ८४ ॥

अद्य प्रभृत्येव नरेन्द्रलक्ष्मी-
र्मयानुशिष्टास्तु वशंवदा ते ।
श्रेयस्तपःसाधनमेव राज्ञां
ज्ञातानुभावेषु तनूद्भवेषु ॥ ८५ ॥

**अद्य इति** ॥ अद्य प्रभृति एव अस्मात् दिनात् आरभ्य एव, नरेन्द्रलक्ष्मीः राजश्रीः, मया, अनुशिष्टा अनुज्ञाता सती, ते तव, वशंवदा वशवर्त्तिनी त्वदायत्ता इत्यर्थः, अस्तु भवतु (त्वमेव राजा भव इति भावः)। (यतः), तनूद्भवेषु स्वपुत्रेषु, ज्ञातानुभावेषु ज्ञातः विदितः प्रकाशीभूतः इत्यर्थः अनुभावः माहात्म्यं येषां तेषु तादृशेषु सत्सु, राज्ञां नृपाणां, तपस्साधनं तपसः साधनं तपश्चरणं एव, श्रेयः श्रेयस्करं, (भवति) ॥ ८५ ॥

तदेष रक्षाविधये प्रजानां
नक्तंदिवं जाग्रदवाप्तखेदः ।
धुरं धरित्र्यास्त्वयि सन्निवेश्य
चिराय विश्राम्यतु वीरसेनः ॥ ८६ ॥

**तत् इति** ॥ तत् तस्मात् हेतोः, प्रजानां प्रकृतिजनानां, रक्षाविधये

परिपालनकरणाय, नक्तंदिवं रात्रिन्दिवं अहोरात्रं इत्यर्थः, जाग्रत् जागरूकः, (अतः एव), अवाप्तखेदः अवाप्तः अनुभूतः खेदः श्रमः येन सः तादृशः, एषः, अयं, वीरसेनः (वीरसेननामा अहं इत्यर्थः), धरित्र्याः पृथिव्याः, धुरं भारं, त्वयि तव उपरि इत्यर्थः, संनिवेश्य निक्षिप्य, चिराय चिरकालं, विश्राम्यतु विश्रान्तः भवतु विश्रामं अनुभवतु वा इत्यर्थः ॥ ८६ ॥

**निवार्यमाणोऽपि मुहुः प्रणम्य**
**नलेन बद्धाञ्जलिसंपुटेन ।**
**निवेश्य तस्मिन्नवनीन्द्रलक्ष्मी-**
**मुपाददे लक्ष्म तपोधनानाम् ॥ ८७ ॥**

**निवार्यमाणः इति** ॥ बद्धाञ्जलिसंपुटेन बद्धं अञ्जलिसंपुटं येन तेन तादृशेन कृताञ्जलिबन्धेन इत्यर्थः, नलेन, मुहुः पुनः पुनः बहुशः इत्यर्थः, निवार्यमाणः अपि निषिध्यमानः अपि, (सः वीरसेनः), तस्मिन् नले, अवनीन्द्रलक्ष्मी राजलक्ष्मीं, निवेश्य निक्षिप्य, तपोधनानां तपः एव धनं येषां तेषां तपस्विनां मुनीनां इति यावत्, लक्ष्म चिह्नं चीराजिनजटादिकं इत्यर्थः, उपाददे धृतवान् ॥ **उपेन्द्रवज्रावृत्तम्** ॥ ८७ ॥

**स बाष्पमोक्षैरपि न क्षमोऽभूत्**
**पितुः समारम्भनिवर्तनाय ।**
**विपर्ययं नैति महात्मनां हि**
**प्रतिश्रुतोऽर्थः प्रतिबन्धकेन ॥ ८८ ॥**

**सः इति** ॥ सः नलः, बाष्पमोक्षैः अपि शोकाश्रुमोचनैः अपि, पितुः स्वजनकस्य, समारभनिवर्तनाय समारंभात् वनगमनप्रयत्नात् निवर्तनं निवारण तस्मै तद्वनगमनरूपप्रयत्नं निवारयितु इत्यर्थः, क्षमः समर्थः, न अभूत् न बभूव । हि यस्मात् कारणात्, महान् आत्मा येषां तेषां महात्मनां उत्तमस्वभावानां, प्रतिश्रुतः प्रतिज्ञातः, अर्थः कार्यं, प्रतिबन्धकेन उपरोधनेन, विपर्ययं विपर्यासं व्यतिक्रमं इति यावत्, न एति न गच्छति न प्राप्नोति इत्यर्थः ॥ **उपेन्द्रवज्रावृत्तम्** ॥ ८८ ॥

अनुप्रयातः सह पौरवर्गै-
नलेन पर्यश्रुविलोचनेन ।
चीरावृतः क्ष्मातिलकः प्रतस्थे
तपोवनं निर्विषयाभिलाषः ॥ ८९ ॥

**अनुप्रयातः इति** ॥ क्ष्मातिलकः क्ष्मा पृथ्वी ('क्ष्मावनिर्मेदिनी मही ।' इत्यमरः) तस्याः तिलकः तिलकवत् स्थितः महीभूषणायमानः इत्यर्थः, (सः वीरसेनः), चीरावृतः चीरं द्रुमवल्कलं तेन आवृतः आच्छादितः धृतचीरवासाः इत्यर्थः, निर्विषयाभिलाषः निर्गतः विषयेषु इन्द्रियार्थेषु अभिलाषः स्पृहा यस्मात् सः तादृशश्च सन् विषयविमुखः सन् इत्यर्थः, पर्यश्रुविलोचनेन पर्यश्रुणी अश्रुपरिप्लुते विलोचने नयने यस्य तेन तादृशेन, नलेन, पौरवर्गैः सह पुरजननिवहैः समं, अनुप्रयातः अनुसृतः सन्, तपोवनं तपस्साधनयोग्यं अरण्यं, प्रतस्थे प्रययौ ॥ ८९ ॥

शोकाग्निवेगं वचनामृतेन
चिरान्मृदूकृत्य नृपः सुतस्य ।
तं पौरमुख्यैः स्वपुरं प्रवेश्य
चकार वन्येन शरीरवृत्तिम् ॥ ९० ॥

**शोकाग्नीति** ॥ नृपः वीरसेनः, सुतस्य तनयस्य नलस्य, शोकाग्निवेगं शोकः स्ववियोगजं दुःखं सः एव अग्निः अनलः तस्य वेगः सन्तापाधिक्यं तं, वचनामृतेन वचनं सान्त्ववादनरूपं निजवाक्यं तदेव अमृतं सुधा तेन, चिरात् सुचिरं कालं कैथंचित् इत्यर्थः, मृदूकृत्य लघूकृत्य तद्दुःखशमनं कृत्वा इत्यर्थः, तं सुतं, पौरमुख्यैः पौरेषु मुख्याः तैः सह, स्वपुरं निजनगरीं, प्रवेश्य संप्रेष्य, वने भवं वन्यं तेन वन्येन वनजातेन कन्दमूलफलादिना, शरीरवृत्तिं देहपोषणं, चकार कृतवान् ॥ ९० ॥

वैखानसैर्मुनिजनैरभिनन्द्यमानः
संसिद्धिमाप तपसः किल वीरसेनः ।

भेजे नलस्त्वखिलपार्थिवमौलिरत्नै-
र्नीराज्यमानचरणः पृथिवीन्द्रलक्ष्मीम् ॥ ९१ ॥

**वैखानसैः इति** ॥ वीरसेनः, वैखानसैः वानप्रस्थाश्रमस्थैः इत्यर्थः, मुनि-जनैः तपस्विनिवहैः, अभिनन्द्यमानः सादरं अभ्युपगम्यमानः सन्, तपसः तपश्चर्यायाः, संसिद्धिं निष्पत्तिं चारितार्थ्यं इत्यर्थः, आप किल प्राप्तवान् खलु । नलः तु, अखिलपार्थिवमौलिरत्नैः अखिलाः समस्ताः ये पार्थिवाः नृपाः तेषां मौलयः किरीटानि तेषु विद्यमानानि रत्नानि तैः, नीराज्यमानचरणः नीराज्यमानौ नीराजनाख्यं शान्तिकर्म प्रापितौ चरणौ यस्य सः तादृशः सन् समस्तसामन्तनृपवन्दितचरणः सन् इत्यर्थः, पृथिवीन्द्रलक्ष्मीं राजलक्ष्मीं, भेजे प्राप ॥ ९१ ॥

इति श्रीसान्धिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते नलसाम्राज्यलाभो नाम

**प्रथमः सर्गः** ॥



# द्वितीयः सर्गः ।

ततोऽभ्यषिञ्चन् विधिवन्नलं द्विजाः
सतां प्रमोदात्तरलं मनोऽभवत् ।
चकार लक्ष्मीः पदमस्य वक्षसि
प्रपेदिरे संपदमूर्जितां प्रजाः ॥ १ ॥

**ततः इति** ॥ ततः वीरसेनवनगमनानन्तरं, द्विः जायन्ते इति द्विजाः ब्राह्मणाः, नलं, विधिवत यथाविधि, अभ्यषिञ्चन् अभिषेकजलस्नानं अकुर्वन । (तदा), सतां साधूनां, मनः मानसं, प्रमोदात् नलपट्टाभिषेकजनितहर्षातिरेकात हेतोः, तरलं लोल अत्यन्तपरवशं इत्यर्थः, अभवत् अभूत् । अस्य नलस्य, वक्षसि उरसि, लक्ष्मीः राजश्रीः, पद आश्रयं, चकार कृतवती । प्रजाः प्रकृतयश्च, ऊर्जितां उत्कृष्टां अत्यधिकां इति यावत्, संपदं धनधान्यादिसमृद्धिं, प्रपेदिरे प्रापुः ॥ अस्मिन सर्गे **वंशस्थं वृत्तम्** ॥ तल्लक्षणन्तु '**जतौ** तु वंशस्थमुदीरितं **जरौ**' ॥ १ ॥

नरेन्द्रलक्ष्म्याः परिरम्भसंभवां
तथा न भेजे मुदमूर्जितां नलः ।
पितुः सपर्याविरहेण संभृतां
यथोपलेभे परितापसंपदम् ॥ २ ॥

**नरेन्द्रेति** ॥ नलः, पितुः जनकस्य, सपर्याविरहेण सपर्यायाः पूजायाः शुश्रूषायाः इति यावत् विरहेण राहित्येन, संभृतां संजातां, परितापसंपदं परितापस्य मनस्सन्तापस्य संपदं आधिक्यं, यथा येन प्रकारेण, उपलेभे प्राप; तथा तेन प्रकारेण, नरेन्द्रलक्ष्म्याः राजलक्ष्म्याः, परिरंभसभवां संश्लेषजनितां, ऊर्जितां अत्यधिकां, मुदं प्रमोदं, न भेजे न लेभे ॥ २ ॥

अपि स्वयं पार्थिवनीतिपारग:
स मन्त्रिणां संमतिमन्ववर्तत ।
विधूदयासादितवृद्धिरम्बुधि-
र्न जातु वेलामभिलङ्घ्य गच्छति ॥ ३ ॥

**अपि इति** ॥ स: नल:, स्वयं स्वत: एव, पार्थिवानां नीतय: तासां पारं गच्छति इति पार्थिवनीतिपारग: अपि राजनीतिनिपुण: सन् अपि, मन्त्रिणां धी-सचिवानां, संमतिं अनुज्ञां, अन्ववर्तत अनुससार । (तत्र दृष्टान्तं आह)— अम्बूनि धीयन्ते अस्मिन् इति अम्बुधि: समुद्र:, विधूदयासादितवृद्धि: विधो: चन्द्रस्य उदयात् आविर्भावात् आसादिता प्राप्ता वृद्धि: येन स: तथोक्त: सन् अपि, जातु कदाचिदपि, वेलां कूलं ("वेला कूलेऽपि वारिधे:" इति विश्व:), अभिलङ्घ्य अतिक्रम्य, न गच्छति न याति ॥ ३ ॥

धृतोदये सीदति कैरवं रवौ
तुषारभानौ कमलं निमीलति ।
अशेषमुच्चैर्मुदमाददे जग-
न्निषेव्यमाणे तु नले नृपश्रिया ॥ ४ ॥

**धृतोदये इति** ॥ रवौ सूर्ये, धृत: उदय: येन स: तस्मिन् धृतोदये कृताविर्भावे सति उदिते सति इति यावत्, कैरवं कुमुदं ('सिते कुमुदकैरवे' इत्यमर:), सीदति म्लानिं गच्छति निर्मीलितं भवति इत्यर्थ: । तुषारा: शीतला: भानव: किरणा: यस्य स: तुषारभानु: तस्मिन् तुषारभानौ चन्द्रे ('तुषार: शीतल: शीत:' 'भानु: करो मरीचि: स्त्रीपुंसयोर्दीधिति: स्त्रियाम् ।' इति च अमर:), (धृतोदये सति), कमलं पद्मं, निमीलति संकोचं प्राप्नोति । नले, नृपश्रिया राजलक्ष्म्या, निषेव्यमाणे तु उपाश्रीयमाणे सति तु, अशेषं समस्तं अपि, जगत् भुवनं, उच्चै: अत्यधिकां (उच्चै: नितरां इति क्रियाविशेषणं वा), मुदं प्रमोदं, आददे स्वीचकार अवाप इत्यर्थ: । (सूर्यस्य चन्द्रस्य वा उदये सति केषांचित् हर्ष: केषांचित् व्यसनं च जायते । नलस्य उदये सति कृत्स्नं जगत् हर्षवशं अभूत् । अत: नल: सूर्यचन्द्रावपि अतिशय्य बभौ । इति भाव:) ॥

**नवोदयेनेव सहस्रभानुना**
**स्वमण्डलं तेन समन्वरज्यत ।**
**अमुष्य तेजस्तु विसारि सर्वतः**
**परं द्विषामेव बभूव दुःसहम् ॥ ५ ॥**

**नवोदयेन इति** ॥ नवः उदयः यस्य तेन नवोदयेन अचिरोदितेन, सहस्रं भानवः किरणाः यस्य तेन सहस्रभानुना सूर्येण, स्वमण्डलं इव निजबिम्बं इव, नवोदयेन अचिरप्राप्तराज्यसंपदा, तेन नलेन, स्वमण्डलं निजप्रकृतिचक्रं प्रकृतिसमूहः इति यावत्, समन्वरज्यत अनुरक्तं कृतं इत्यर्थः (सूर्यमण्डलपक्षे तु रक्तवर्णं क्रियते इति अर्थः बोध्यः)। सर्वतः समन्ततः, विसारि विसृत्वरं, अमुष्य अस्य नलस्य, तेजः तु प्रतापः पुनः, द्विषां शत्रूणां एव, परं अतितरां, दुस्सहं असह्यं, बभूव। (सूर्यतेजः सर्वेषामपि जनानां दुस्सहं भवति; अस्य नलस्य तेजस्तु स्वशत्रूणामेव दुस्सहं आसीत्। इति अतः सूर्यादपि नलः उत्कृष्टतरः अभूत् इति भावः) ॥ ५ ॥

**शरीरभाजां करणीयसाक्षिणः**
**परेषु मित्रेषु च तुल्यवृत्तयः ।**
**विचेरुरेतस्य दिने दिने चराः**
**करास्तुषारेतरदीधितेरिव ॥ ६ ॥**

**शरीरभाजामिति** ॥ एतस्य अस्य नलस्य, चराः चाराः गूढसंचारिणः दूताः इत्यर्थः, तुषारेतरदीधितेः तुषारेतराः अशीतलाः उष्णाः इत्यर्थः दीधितयः किरणाः यस्य तस्य ('भानुः करो मरीचिस्त्रीपुंसयोर्दीधितिः स्त्रियाम्।' इत्यमरः) सूर्यस्य इत्यर्थः, कराः इव किरणाः इव, शरीरभाजां शरीरिणां देहिनां, करणीयसाक्षिणः करणीयानां कृत्यानां साक्षिणः साक्षात् द्रष्टारः प्रत्यक्षदर्शिनः, (तथा), परेषु शत्रुषु, मित्रेषु च सुहृत्सु च, तुल्यवृत्तयः तुल्या वृत्तिः येषां ते तथोक्ताः समव्यवहाराः च सन्तः, दिने दिने प्रतिदिनं, विचेरुः समचरन् ॥ ६ ॥

**प्रविश्य रन्ध्राणि तनून्यपि द्विषा-**
**मुदीरयामास स वृत्तिमौरगीम् ।**

शिरांसि तुङ्गान्युपनीय नम्रतां
वितेनिरे तत्र परे तु वैतसीम् ॥ ७ ॥

**प्रविश्य इति** ॥ सः नलः, तनूनि अपि अतिसूक्ष्माणि अपि, द्विषां शत्रूणां, रन्ध्राणि छिद्राणि, प्रविश्य सम्यक् अवगत्य इत्यर्थः, उरगस्य सर्पस्य इयं औरगी तां औरगीं उरगसंबन्धिनीं, वृत्तिं स्वभावं, उदीरयामास प्रकटीचकार (यथा उरगः अतिसूक्ष्माण्यपि द्वाराणि गूढं प्रविश्य समये प्राणिनः दशन्ति ; एवं सः नलः अपि स्वशत्रूणां व्यसनादिकं अन्तश्छिद्रं चारैः गूढं अवगत्य अवसरे तेषु प्रहरति इति भावः)। परे तु तस्य शत्रवः पुनः, तत्र तस्मिन् नले, तुङ्गानि उन्नतानि, शिरांसि निजशीर्षाणि, नम्रतां प्रह्वत्वं, उपनीय प्रापय्य, वेतसस्य इय तां वैतसीं वेतसम्बन्धिनीं, (वृत्ति), वितेनिरे चक्रुः। (यथा वेतसाः नम्रत्वं उपगम्य प्रबलतरात् वायोः आत्मानं रक्षन्ति ; तद्वदेव प्रबलतरस्य नलस्य अग्रे प्रणम्रशिरसः भूत्वा आत्मानं ररक्षुः इति भावः) ॥ ७ ॥

अपि त्रिलोकीं विजहार लीलया
निरर्गलं दोर्द्रविणार्जितं यशः ।
अमुष्य मन्त्रस्तु कदाचिदाययौ
न कर्णमूलान्यपि पार्श्ववर्तिनाम् ॥ ८ ॥

**अपि इति** ॥ दोर्द्रविणार्जितं दोष्णोः बाह्वोः द्रविणं बलं ('द्रविणं तु बले धने' इत्यमरः) तेन अर्जितं संपादितं भुजपराक्रमलब्धं इत्यर्थः, अमुष्य एतस्य नलस्य, यशः कीर्तिः, निरर्गलं निर्यन्त्रणं यथा तथा स्वैरं इत्यर्थः, त्रयाणां लोकानां समाहारः त्रिलोकी तां त्रिलोकीं अपि भुवनत्रये अपि इत्यर्थः, लीलया सलीलं अनायासेन, विजहार सञ्चचार। (अमुष्य), मन्त्रः तु विचारः पुनः 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः, पार्श्वे समीपे वर्तन्ते इति तेषां पार्श्ववर्तिनां अपि समीपस्थानां अपि, कर्णमूलानि श्रवणोपकण्ठानि, कदाचित् जातु अपि, न आययौ न आजगाम ॥ ८ ॥

यथेन्द्रियाणां निवहो निजं निजं
विहाय नान्यं विषयं निषेवते ।

तथा जनस्तेन कृतानुशासनः
पथः स्वकीयादपरं न शिश्रिये ॥ ९ ॥

**यथा इति** ॥ यथा यद्वत्, इन्द्रियाणां हृषीकाणां, निवहः समूहः पञ्चेन्द्रियाणि इत्यर्थः, निजं निजं स्वं स्वं, विषयं गोचरं पदार्थं, विहाय मुक्त्वा, अन्यं अपरं ( विषयं ) विषयान्तरं इत्यर्थः, न निषेवते न संश्रयते; तथा तद्वदेव, तेन नलेन, कृतं अनुशासनं आज्ञा यस्य सः कृतानुशासनः अनुशिष्टः इत्यर्थः, जनः नरः, स्वकीयात् स्वीयात्, पथः मार्गात्, अपरं अन्यं पन्थानं. न शिश्रिये न भजते स्म ॥ ९ ॥

निरूपिते वर्त्मनि शास्त्रचक्षुषा
पदं वितन्वन्नकृताङ्गपीडनः ।
अणीयसोऽपि प्रकटीकृताङ्कुरा-
नलुण्ठयत्क्ष्मातिलकः स कण्टकान् ॥ १० ॥

**निरूपिते इति** ॥ क्ष्मातिलकः भुवनभूषायमाणः, सः नलः, शास्त्रं एव चक्षुः तेन शास्त्रचक्षुषा नृपनीतिशास्त्रनयनेन, निरूपिते दर्शिते, वर्त्मनि मार्गे, पदं चरणं प्रवृत्तिं इत्यर्थः, वितन्वन् कुर्वन्, ( अतः एव ), अकृताङ्गपीडनः अङ्गानां स्वाम्यमात्यसुहृदादीनां सप्तानां राज्याङ्गानां अवयवानां च पीडनं हिंसनं अङ्गपीडनं न कृतं अकृतं अकृतं अङ्गपीडनं येन सः तादृशः सन्, प्रकटीकृताङ्कुरान् प्रकाशीकृतप्ररोहान्. अणीयसः अल्पीयसः अपि, कण्टकान् क्षुद्रशत्रून् द्रुमनखान् च 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः।' इत्यमरः, अलुण्ठयत् अपाहरत् । (यथा कश्चित् पथिकः स्वगन्तव्यमार्गे सम्यक्प्रेरितदृष्टिः अत्यल्पानपि कण्टकान् उन्मूलयन् सन् स्वावयवेषु अकृतव्रणः व्रजेत् एवं सः नलोऽपि नृपनीतिपरिज्ञानेन न्यायमार्गे प्रवर्तमानः राज्याङ्गभूतानां अमात्यादीनां मनःक्लेशं अकुर्वन्नेव अत्यल्पानपि निजशत्रून् उन्मूलयामास । इति भावः ।) ॥ १० ॥

निरर्गलं शैलवनाभिगामिनी-
मपीडयन्नेव करेण गामसौ ।
वृषं पुरस्कृत्य समीहितं दुह-
न्नदृष्टपूर्वो स्फुटमाप गोपताम् ॥ ११ ॥

**निरर्गलं इति** ॥ असौ नलः, निरर्गलं निष्प्रतिबन्धं यथा तथा ( स्वैरं इति गोपक्षे), शैलवनाभिगामिनीं अनेकगिरिकाननोपेतां इत्यर्थः (गिरिषु वनेषु च संचरन्तीं इति गोपक्षे ), गां पृथिवीं ( धेनुं च ), ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्र-घृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः" इत्यमरः ), करेण षष्ठांशभूतेन बलिना (हस्तेन च), अपीडयन् एव अक्लेशयन् सन् एव (ऊधसः निष्पीडनं अकुर्वन्नेव इति गोपक्षे), वृषं धर्मं वृषभं च, 'वृषः स्याद्वासवे धर्मे सौरभेये च शुक्रजे।' इति विश्वः, पुरस्कृत्य अवलंब्य (अग्रे निधाय इति गोपक्षे), समीहितं स्वाभिलषितं पदार्थजातं यथेष्टं दुग्धं च, दुहन् आददानः सन् , अदृष्टपूर्वां पूर्वं न दृष्टा अदृष्टपूर्वा तां इतः पूर्वं अनवलोकितां अतिविलक्षणामित्यर्थः, गां पाति इति गोपः भूपः गोपालश्च तस्य भावः तां गोपतां भूपालत्वं गोपत्वं च, स्फुटं व्यक्तं, आप लेभे ॥ लोके तावत् गोपाः दोहनकाले धेनुं गोष्ठे रज्ज्वादिभिः बध्वा वत्सं पुरस्कृत्य तस्याः आपीनं करेण निष्पीड्य दुग्धं आददते । अयं तु धेनौ शैलवनादिषु स्वैरं संचरन्त्यां सत्यामेव तस्याः पुरः वृषभं संस्थाप्य तस्याः आपीनं स्वपाणिना अनिष्पीडयन् सन् एव दोहनं करोति । अतः एव लोके अदृष्टपूर्वः अतिविलक्षणः कोपि गोपः । इति श्लेषार्थः । वास्तविकार्थस्तु— असौ नलः विगतकण्टकां विविधगिरिकाननादिममेतां भुवं, करग्रहणेन स्वप्रजाः अपीडयन्नेव धर्मेण पालयामास । तस्मात् अतिविलक्षणः अयं भूपालः । इति ॥ ११ ॥

न केवलं दण्डभयाज्जनोऽखिल-
स्तदाभवत्तत्करदानसमुखः ।
अभून्न तादृग्विषयोऽपि देहिनां
मनोरथो येन जगाम वन्ध्यताम् ॥ १२ ॥

**न इति** ॥ तदा नलराज्यपरिपालनसमये, अखिलः समस्तः, जनः नरः इत्यर्थः, दण्डभयात् निग्रहभीत्या, तत्करदानसंमुखः केवलं तस्य नलस्य करदाने षष्ठांशभूतबलिप्रदाने संमुखः उद्युक्तः एव केवलं, न अभवत् न आसीत् । ( किन्तु ), येन विषयेन, देहिनां प्राणिनां, मनोरथः वाञ्छा, वन्ध्यतां विफलतां निष्प्रयोजनत्वं इति यावत्, न जगाम न प्राप; तादृक् तादृशः, विषयः अपि अपि, न अभूत् न बभूव ॥ १२ ॥

निरङ्कुशस्तस्य यशोमतंगजः
प्रतापसिन्दूररजोरुणाननः ।
निरस्य यन्तारमितस्ततश्चर-
न्नरिद्विपानां समशोषयन्मदम् ॥ १३ ॥

**निरङ्कुशः इति** ॥ निरङ्कुशः अङ्कुशरहितः दुर्निवारः इत्यर्थः, (तथा), प्रतापसिन्दूररजोरुणाननः प्रतापः पराक्रमः एव सिन्दूररजांसि नागसंभवचूर्णानि तैः अरुणं रक्तवर्णं आननं वदनं यस्य सः तथाभूतः, तस्य नलस्य, यशोमतङ्गजः यशः कीर्तिः एव मतंगजः कुञ्जरः 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी ।' इत्यमरः, यन्तारं निरोधकं, निरस्य निर्धूय, इतः ततः सर्वत्र, चरन् पर्यटन् सन्, अरिद्विपानां अरयः शत्रवः एव द्विपाः गजाः तेषां, मदं दर्पं, अशोषयत् शोषं प्रापयत् ॥ १३ ॥

इति व्यपास्य व्यसनान्यनारतं
प्रपास्यतस्तस्य महीं महीभुजः ।
उपायनीकर्तुमिवावनीरुहां
प्रसूनकोषानुदभून्नवो मधुः ॥ १४ ॥

**इति इति** ॥ इति इत्थं, व्यसनानि पानद्यूतादिदोषान् 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ।' इत्यमरः, व्यपास्य विहाय, अनारतं अजस्रं सर्वदा इति यावत्, महीं पृथिवीं, प्रपास्यतः परिपालयिष्यतः, तस्य, महीभुजः राज्ञः नलस्य, अवन्यां रोहन्ति इति अवनीरुहः तेषां ावनीरुहां वृक्षाणां, प्रसूनकोषा-(शा)न् प्रसूनानां पुष्पाणां कोषाः कुड्मलाः एव कोषाः धनराशयः तान् 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः, उपायनीकर्तुं इव प्राभृतीकर्तुं इव 'प्राभृतं तु प्रदेशनम् । उपायनं' इत्यमरः, नवः प्रत्यग्रः, मधुः वसन्तऋतुः, उदभूत् प्रावर्तत ॥ १४ ॥

शरीरभाजां जनयिष्यतो मुदं
निदेशलाभादिव मेदिनीपतेः ।

न वासरस्तीव्रतरातपोऽभव-
न्निशापि नातीव तुषारदूषिता ॥ १५ ॥

शरीरभाजां इति ॥ शरीरभाजां देहिनां, मुदं हर्षं, जनयिष्यतः उत्पादयिष्यतः, मेदिनीपतेः राज्ञः नलस्य, निदेशलाभात् इव आज्ञाधिगमात् हेतोः इव, वासरः वसन्तदिवसः इत्यर्थः, तीव्रतरातपः तीव्रतरः प्रचण्डतरः आतपः सूर्यकान्तिः यस्मिन् सः तथाभूतः, न अभवत् न आसीत् । (तथैव), निशा अपि वसन्तरात्रयः अपि इत्यर्थः, अतीव अत्यन्तं, तुषारदूषिता तुषारैः हिमैः दूषिता क्लिष्टा अभिभूता इति यावत्, न (अभवत्) ॥ १५ ॥

अनुप्रतस्थे मलयाद्रिमारुत-
स्त्विषांपतिं प्रस्थितमुत्तरां दिशम् ।
विहाय मार्गं महनीयतेजसां
निजेच्छया चेष्टितुमुत्सहेत कः ॥ १६ ॥

अनुप्रतस्थे इति ॥ मलयाद्रिमारुतः मलयाद्रेः मलयपर्वतस्य मारुतः वायुः मन्दमारुतः इत्यर्थः, उत्तरां उदीचीं, दिशं ककुभं उत्तरायणं इत्यर्थः, प्रस्थित प्रयान्त, त्विषांपतिं सूर्यं, अनुप्रतस्थे अनुसृत्य प्रस्थितवान् । कः को वा नरः, महनीयं तेजः येषां तेषां महनीयतेजसां श्लाघनीयप्रतापानां जनानां, मार्गं सरणिं, विहाय मुक्त्वा, निजेच्छया स्वेच्छया स्वेच्छानुरूपं इत्यर्थः, चेष्टितुं व्यवहर्तुं, उत्सहेत शक्नुयात् ॥ कोऽपि न उत्सहेत इत्यर्थः ॥ १६ ॥

सरोरुहाणां सुहृदां पराभवा-
दवाप्तविद्वेष इवानुवासरम् ।
क्रमेण संपादितपाटवैः करै-
र्जहार नीहारपरम्परां रविः ॥ १७ ॥

सरोरुहाणां इति ॥ रविः सूर्यः, सुहृदां मित्राणां सुहृद्भूतानां इत्यर्थः, सरोरुहाणां पद्मानां, पराभवात् (हिमकृतात्) अभिभवात्, अनुवासरं अनुदिनं, अवाप्तः उपगतः विद्वेषः वैरं येन सः अवाप्तविद्वेषः संजातवैरः इव, क्रमेण काल-

क्रमेण, संपादितपाटवैः पटोः भावः पाटवं सामर्थ्यं संपादितं पाटवं यैः ते तथाभूतैः, करैः मयूखैः (हस्तैः इति च गम्यते), नीहारपरंपरां नीहाराणां हिमानां 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।' इत्यमरः परंपरां संहतिं, जहार अपहृतवान् ॥ १७ ॥

विलोक्य रत्नाकरमेखलां भुवं
स्ववंशकेतावनुरागिणीं नले ।
प्रमोदलाभादिव शीतदीधितिः
प्रसादसंपत्तिमवाप कामपि ॥ १८ ॥

**विलोक्य इति** ॥ शीतदीधितिः शीतकिरणः चन्द्रः इति यावत्, रत्नाकरमेखलां समुद्ररशनां उदधिपरिवेष्टितां इत्यर्थः, भुवं भूमिं, स्ववंशकेतौ स्वस्य वंशस्य चन्द्रकुलस्य इत्यर्थः केतुः चिह्नं केतुवत् व्यावर्तकः इत्यर्थः मुख्यः इति यावत् तस्मिन् तादृशे, नले विषये, अनुरागिणीं प्रीतिमतीं, विलोक्य, प्रमोदलाभात् इव प्रहर्षाधिगमात् हेतोः इव, कामपि अनिर्वचनीयां, प्रसादसंपत्तिं प्रसन्नताधिक्यं अधिकनैर्मल्यं इत्यर्थः, अवाप लेभे ॥ १८ ॥

हितं प्रजानां सततं विधित्सतः
क्षणप्रदानार्थमिवास्य भूपतेः ।
निरस्य रात्रेः परिणाहसंपदं
रविर्दिनं द्राघयितुं प्रचक्रमे ॥ १९ ॥

**हितं इति** ॥ रविः सूर्यः, सततं सर्वदा, प्रजानां प्रकृतीनां स्वराज्यस्थजनानां इति यावत्, हितं मंगलं क्षेमं इति यावत्, विधातुं इच्छन् विधित्सन् तस्य विधित्सतः चिकीर्षतः, अस्य, भूपतेः नलमहाराजस्य, क्षणप्रदानार्थं इव अधिकावकाशदानाय इव, रात्रेः रजन्याः, परिणाहसंपदं परिणाहः विशालता दैर्घ्यं इति यावत् तस्य संपदं समृद्धिं दैर्घ्याधिक्यं इत्यर्थः, निरस्य अपोह्य, दिनं दिवसं दिवाकालं इत्यर्थः, द्राघयितुं दीर्घतरं कर्तुं, प्रचक्रमे आरेभे ॥ (वसन्तकाले रात्रयः ह्रस्वाः दिवसाश्च दीर्घाः भवन्ति इति प्रसिद्धम्) ॥ १९ ॥

लताः परीरम्भमवाप्य निर्भरं
नभस्वतश्चन्दनशैलजन्मनः ।
समुल्लसन्नूतनपल्लवच्छला-
व्यजृम्भयन्रागमिवान्तरं बहिः ॥ २० ॥

**लताः इति** ॥ लताः वल्ल्यः 'वल्लीतु व्रततिर्लता' इत्यमरः, चन्दनशैलजन्मनः चन्दनप्रधानः शैलः चन्दनशैलः मलयगिरिः इत्यर्थः तत्र जन्म उत्पत्तिः यस्य तस्य तादृशस्य, नभस्वतः वायोः 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इत्यमरः, मन्दमारुतस्य इत्यर्थः, निर्भरं गाढं, परीरंभं सश्लेषं, अवाप्य लब्ध्वा, समुल्लसन्ति समुदितानि यानि नूतनपल्लवानि नवकिसलयानि तेषां छलात् व्याजात्, अन्तः भवः आन्तरः तं आन्तरं अन्तर्गतं, रागं अनुरागं, व्यजृंभयन् इव प्रकव्यकुर्वन् इव ॥ २० ॥

विचुम्बनेऽपि क्षमतामनागता
वितन्वती केवलमुत्सवं दृशोः ।
बभूव मुग्धा सहकारमञ्जरी
पिकस्य मौनव्रतभञ्जने पटुः ॥ २१ ॥

**विचुम्बने इति** ॥ विचुंबने अपि पुष्परसास्वादने अपि (अधरपाने अपि इति च), क्षमतां सहिष्णुत्वं, अनागता अप्राप्ता, अतः एव, दृशोः केवलं चक्षुषोः एव परं, उत्सवं सन्तोषं, वितन्वती उत्पादयन्ती, मुग्धा अतिमनोज्ञा (मुग्धस्वभावा च), सहकारमञ्जरी सहकारस्य आम्रविशेषस्य 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।' इत्यमरः, मञ्जरी स्तबकः (तदाख्या काचित् नायिका च), पिकस्य कोकिलस्य (कस्यचित् नायकस्य च), मौनव्रतभंजने मोनव्रतस्य तूष्णीभावस्य भञ्जने नाशने कूजितकरणविषये इत्यर्थः (संल्लापकरणविषये च), पटुः समर्था, बभूव ॥ २१ ॥

मयैव कृत्स्नं जगदद्य निर्जितं
वयस्य दूरेऽस्तु शरव्ययस्तव ।

इतीव पुंस्कोकिलकूजितच्छला-
दुदीरयामास मधुर्मनोभवम् ॥ २२ ॥

**मया इति** ॥ 'वयस्य हे मित्र, अद्य संप्रति, कृत्स्नं समस्तं, जगत् भुवनं, निर्जितं स्ववशीकृतं इत्यर्थः; (तस्मात्), तव भवतः, शरव्ययः बाणमोक्षणं इत्यर्थः, दूरे अस्तु मा अस्तु इत्यर्थः ।' इति एवं, मधुः वसन्तः, पुंस्कोकिल-कूजितच्छलात् पुंस्कोकिलस्य पिकयूनः कूजितस्य शब्दस्य छलात् व्याजात्, मनोभवं मन्मथं, उदीरयामास इव उवाच इव ॥ २२ ॥

प्रसूनसौरभ्यहरं समीरणं
नियन्तुमभ्युत्सुकतामुपागताः ।
विलोलपुष्पन्धयमण्डलीमिषा-
दुदक्षिपन्पाशमिवायसं द्रुमाः ॥ २३ ॥

**प्रसूनेति** ॥ द्रुमाः वृक्षाः, प्रसूनसौरभ्यहरं प्रसूनानां कुसुमानां सौरभ्यं परिमलं हरति गृह्णाति इति तं तथोक्तं, समीरणं पवनं, नियन्तुं बन्धुं, अभ्यु-त्सुकतां अभ्यौत्सुक्यं तत्परतां इति यावत्, उपागताः प्राप्ताः सन्तः, विलोलाः चञ्चलाः भ्रमणशीलाः इत्यर्थः ये पुष्पन्धयाः षट्पदाः तेषां मण्डली समूहः तस्याः मिषात् व्याजात्, अयसः विकारः तं आयसं अयसा निर्मितं इत्यर्थः लोहमयं इति यावत्, पाशं जालं, उदक्षिपन् इव उपरि व्यस्तारयन् इव ॥ २३ ॥

परागपूरैः करिकेसरोद्भवैः
पिशङ्गिताङ्गः समदो मधुव्रतः ।
चिरं वितन्वन्नपि चाटुचातुरीं
विमृश्य दीर्घं प्रिययान्वगम्यत ॥ २४ ॥

**परागपूरैः इति** ॥ करिकेसरोद्भवैः नागकेसरकुसुमोत्पन्नैः, परागपूरैः परागाणां पुष्परजसां पूरैः निकरैः, पिशङ्गितं कपिशवर्णीकृतं अङ्गं शरीरं यस्य सः पिशङ्गिताङ्गः, समदः मदेन सहितः, मधु पुष्परसं व्रतयति (=भुङ्क्ते) इति मधुव्रतः अलिः 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।' इत्यमरः, चाटुचातुरीं चाटूनां

प्रियोक्तीनां चातुरीं चातुर्यं नैपुण्यं इति यावत्, चिरं चिरकालं, वितन्वन् कुर्वन् अपि, प्रियया स्वसहचर्या भ्रमर्या, दीर्घं चिरं, विमृश्य विचार्य, अन्वगम्यत अन्वसियत ॥ २४ ॥

लताः परिष्वज्य हठान्नभस्वता
विमुच्यमानाः प्रतिलोलपल्लवाः ।
मधुव्रतौघैश्चपलैर्विरेजिरे
विमर्दमुक्तैः कबरीभरैरिव ॥ २५ ॥

**लताः इति** ॥ नभस्वता वायुना, हठात् बलात्कारेण, परिष्वज्य समाश्लिष्य, विमुच्यमानाः विसृज्यमानाः, (अतः एव), प्रतिलोलपल्लवाः प्रतिलोलानि चञ्चलानि पल्लवानि किसलयानि यासां ताः तथाभूताः, लताः वल्ल्यः, चपलैः चञ्चलैः परितः भ्रमद्भिः इत्यर्थः, मधुव्रतौघैः मधुव्रतानां भृङ्गाणां ओघाः समूहाः तैः, विमर्दमुक्तैः विमर्दे सुरतकाले मुक्तैः विश्लथैः, कबरीभरैः इव कबर्याः केशवेशस्य 'कबरी केशवेशोऽथ' इत्यमरः, केशबन्धस्य इति यावत् भरैः भारैः, (उपलक्षिताः) इव, विरेजिरे बभुः ॥ २५ ॥

परिप्लवा मूर्ध्नि लवङ्गवीरुधः
शिलीमुखालिः सुतरां व्यराजत ।
नभस्वता चन्दनशैलतश्चिरा-
दुपेत्य मुक्ता किमु वेणिरायता ॥ २६ ॥

**परिप्लवा इति** ॥ लवङ्गवीरुधः लवङ्गलतायाः, मूर्ध्नि शिरसि उपरिभागे इत्यर्थः, परिप्लवा परिभ्रमन्ती, शिलीमुखालिः शिलीमुखानां भ्रमराणां आलिः श्रेणिः सन्दोहः इति यावत्, नभस्वता मन्दमारुतेन इत्यर्थः, चिरात् चिरप्रवासानन्तरं इत्यर्थः, चन्दनशैलतः मलयपर्वतात्, उपेत्य आगत्य, मुक्ता विश्लथीकृता, आयता दीर्घा, वेणिः किमु प्रवेणीबन्धः किम् ; (इतीव), सुतरां सुभृशं, व्यराजत अशोभत ॥ २६ ॥

निसर्गशोणैर्ललितः सपल्लवै-
र्नवैरशोकः स्तबकैरशोभत ।

निचीयमानः श्वसितैर्वियोगिनां
मनोभवाग्निः किमु राशितां गतः ॥ २७ ॥

निसर्गेति ॥ ललितः मनोज्ञः, अशोकः अशोकवृक्षः, निसर्गशोणैः निसर्गेण स्वभावेन शोणाः लोहिताः रक्तवर्णाः इति यावत् तैः तादृशैः, (तथा), पल्लवैः सहिताः तैः सपल्लवैः किसलयसहितैः, नवैः प्रत्यग्रैः, स्तबकैः कुसुममञ्जरीभिः, वियोगिनां विरहिणां, श्वसितैः निश्श्वासवातैः, निचीयमानः समिध्यमानः प्रोद्दीप्यमानः इति यावत्, (अतः एव), राशितां पुञ्जीभावतां, गतः प्राप्तः, मनोभवाग्निः किमु मन्मथानलः किम् । (इतीव), अशोभत बभौ ॥ २७ ॥

निराकृतः कण्टकमालया बहिः
समाहृतः सौरभसंपदान्तिकम् ।
बभूव रोलम्बयुवा न चुम्बितुं
प्रभुर्विमोक्तुं च सुवर्णकेतकीम् ॥ २८ ॥

निराकृतः इति ॥ बहिः बहिःप्रदेशे, कण्टकमालया शूकसमूहेन (क्षुद्रशत्रुसमूहेन इति च गम्यते), निराकृतः निरुद्धः, सौरभसंपदा सौरभाणां परिमलानां संपदा समृद्ध्या, अन्तिकं समीपे इत्यर्थः, समाहृतः समाकृष्टः, रोलंबयुवा भ्रमरयुवा एव युवा तरुणः, सुवर्णकेतकीं रक्तकेतकीकुसुमं (युवतीं इति च व्यज्यते), चुम्बितुं पुष्परसं पातुं (अधरपानं कर्तुं इति च), प्रभुः समर्थः, न (अभवत्); विमोक्तुं च विस्रष्टुं च, (प्रभुः न अभवत्) ॥ २८ ॥

इति प्रगल्भे सुरभौ निरङ्कुशं
पिकस्वनैर्गायति मन्मथस्तवम् ।
हिरण्मयं पत्रिणमेव तं स्मर-
भरंस्त भावेषु न केषुचिन्नलः ॥ २९ ॥

इतीति ॥ इति एवं, प्रगल्भे अतिप्रौढे, सुरभौ वसन्ते, 'सुरभिर्ना जातिफले वसन्ते चम्पके द्रुमे ।' इति त्रिकाण्डशेषः, पिकस्वनैः कोकिलरवैः, मन्मथस्तवं अनङ्गवैभवं, निरङ्कुशं निरर्गलं यथा तथा, गायति गानेन वर्णयति

सति, नलः, तं पूर्वोक्तं, हिरण्मयं सौवर्णं, पत्त्रिणं एव पक्षिणं हंसं एव, स्मरन् सदा चिन्तयन् सन्, केषुचित् केष्वपि, भावेषु पदार्थेषु, न अरंस्त प्रीतिं न अभजत् इत्यर्थः ॥ २९ ॥

**अपाकरिष्यन्नथ मानसीं रुजं**
**नृपः कदाचिद्गृहदीर्घिकां ययौ ।**
**जवातिरेकादवितर्किताऽगतिः**
**स चोपतस्थे पतगोत्तमः पुरः ॥ ३० ॥**

**अपाकरिष्यन्निति** ॥ अथ अनन्तरं, कदाचित् एकदा, नृपः नलभूपतिः, मनसः इयं तां मानसीं हृदयस्थितां इत्यर्थः, रुजं व्यथां, अपाकरिष्यन् निराकरिष्यन् सन् दूरीकर्तुकामः सन् इत्यर्थः, गृहे स्थिता दीर्घिका तां गृहदीर्घिकां भवनवापीं 'वापी तु दीर्घिका' इत्यमरः, ययौ आससाद । अवितर्किताऽगतिः अवितर्किता अचिन्तिता आगतिः आगमनं यस्य सः तादृशः, सः तादृशः, पतगोत्तमः च पक्षिश्रेष्ठः च, जवातिरेकात् अत्यन्तवेगेन, पुरः अग्रे नलसमक्षं इत्यर्थः, उपतस्थे उपस्थितवान् ॥ ३० ॥

**ससंभ्रमं तौ नयनातिथीकृतौ**
**परस्परं कल्पितबन्धुसत्क्रियौ ।**
**मिथः कथालापरसायनैरुभौ**
**निषेदतुः क्वापि निकुञ्जमन्दिरे ॥ ३१ ॥**

**ससंभ्रमं इति** ॥ ससंभ्रमं साभिनिवेशं यथा तथा, नयनातिथीकृतौ नेत्रगोचरीकृतौ लब्धदर्शनौ, तौ, उभौ नलहंसौ इत्यर्थः, परस्परं अन्योन्यं, कल्पितबन्धुसत्क्रियौ कल्पिता विरचिता बन्धुसत्क्रिया सुहृत्सत्कारः याभ्यां तौ तादृशौ सन्तौ, मिथः एकान्ते परस्परं वा, कथालापरसायनैः नानाविधसँल्लापामृतैः, क्वापि कुत्रचित्, निकुञ्जमन्दिरे लतागृहे, निषेदतुः उपविविशतुः । कुत्रचित् लतानिकुञ्जे उपविश्य तौ उभौ अपि मिथः विस्रंभालापं चक्रतुः इत्यर्थः ॥ ३१ ॥

**सुरापगाशीकरसङ्गशीतलं**
**पतङ्गमुत्सङ्गतले निवेशयन् ।**

विशांपतिः प्रेमवशाद्बिसाङ्कुरं
करेण तस्याधिमुखं न्यवेशयत् ॥ ३२ ॥

**सुरापगेति** ॥ विशांपतिः नलमहाराजः, सुरापगायाः आकाशगङ्गायाः शीकराः अम्बुकणाः तेषां सङ्गेन संबन्धेन शीतलः शीतलस्पर्शः तं तादृशं, पतङ्गं हंसपक्षिणं, उत्सगतले अङ्कप्रदेशे, निवेशयन् निदधत्, प्रेमवशात् प्रीत्यतिशयात् हेतोः, करेण निजहस्तेन, तस्य हंसस्य, अधिमुखं मुखे चञ्च्वां इत्यर्थः, बिसाङ्कुरं मृणालाङ्कुरं, न्यवेशयत् न्यक्षिपत् ॥ ३२ ॥

अनन्तरं स्मेरसरोजसोदरे
मुखे नरेन्द्रस्य निवेश्य लोचने ।
सुधारसस्यन्दि मनोहरं क्षणा-
दवोचदित्थं वचनं विहङ्गमः ॥ ३३ ॥

**अनन्तरं इति** ॥ अनन्तरं अथ, विहङ्गमः हंसपक्षी, स्मेरसरोजसोदरे स्मेरं विकचं यत् सरोजं पद्मं तस्य सोदरं सदृशं इत्यर्थः तस्मिन् तादृशे, नरेन्द्रस्य नलमहाराजस्य, मुखे वदने, लोचने स्वनयने, निवेश्य निक्षिप्य तन्मुखं अवलोक्य इत्यर्थः, इत्थं वक्ष्यमाणप्रकारेण, सुधारसस्यन्दि अमृतरसवर्षि, मनोहरं हृदयङ्गम, वचनं वाक्यं, क्षणात् शीघ्रं इत्यर्थः, अवोचत् अब्रवीत् ॥ ३३ ॥

अवाप नूनं परिपाकसंपदं
वसुन्धरायाश्चिरसञ्चितं तपः ।
पुरन्दरं द्यौरिव येयमीश्वरं
सखे भवन्तं समुपस्थिता स्वयम् ॥ ३४ ॥

**अवाप इति** ॥ सखे हे मित्र, वसुन्धरायाः पृथिव्याः, चिरसञ्चितं चिरकालार्जितं, तपः कायक्लेशादिनियमः, परिपाकसंपदं परिणामसमृद्धिं विशेषपरिणातिं इत्यर्थः, नूनं ध्रुवं, अवाप लेभे । या, इयं एषा वसुन्धरा, ईश्वरं प्रभुं. भवन्तं त्वां, द्यौः स्वर्गः, पुरन्दरं इव इन्द्रं इव, स्वयं स्वतः एव, समुपस्थिता समाश्रिता, (अभवत्) ॥ ३४ ॥

दिने दिने किन्नरसुन्दरीजनैः
सुखोषितैः कल्पमहीरुहामधः ।
अनन्यसामान्यतया सकौतुकं
सुधांशुशुभ्रं तव गीयते यशः ॥ ३५ ॥

दिने दिने इति ॥ कल्पमहीरुहां कल्पवृक्षाणां, अधः मूलप्रदेशे, सुखोषितैः सुखेन निषण्णैः इत्यर्थः, किन्नरसुन्दरीजनैः किम्पुरुषाङ्गनानिवहैः, सुधांशुशुभ्रं सुधांशुः चन्द्रः तद्वत् शुभ्रं धवलं, तव भवतः, यशः कीर्तिः, अनन्यसामान्यतया अन्येषां असाधारणत्वेन हेतुना, दिने दिने प्रतिदिनं, सकौतुकं साभिनिवेशं यथा तथा, गीयते गानरूपेण वर्ण्यते ॥ ३५ ॥

कथाप्रसङ्गेन वयस्य भूभुजां
गुणोत्तरं पृच्छति वृत्रवैरिणि ।
उदाहरन्ति प्रथमं सकौतुकाः
पुनः पुनस्त्वां सुरसिद्धचारणाः ॥ ३६ ॥

कथाप्रसङ्गेन इति ॥ वयस्य हे मित्र, वृत्रवैरिणि वृत्रशत्रौ इन्द्रे इति यावत्, कथाप्रसङ्गेन कथायोगेन भूलोकवृत्तान्तप्रसक्त्या इत्यर्थः, भूभुजां नृपाणां मध्ये, गुणोत्तर गुणैः कौशील्यादिभिः उत्तर श्रेष्ठ (नृप), पृच्छति अनुयुञ्जाने सति, सुरसिद्धचारणाः सुराश्च सिद्धाश्च चारणाश्च, सकौतुकाः साभिनिवेशाः सन्तः, पुनः पुनः मुहुः मुहुः, त्वां भवन्तं एव, ( भूभुजां ), प्रथमं आद्यं श्रेष्ठ इत्यर्थः, उदाहरन्ति निदर्शयन्ति ॥ ३६ ॥

अहं च साम्राज्यसुखेऽपि निःस्पृहं
मनस्त्वदीयं मयि दूरवर्तिनि ।
विदन्नपि त्वामपहाय यच्चिरं
चरामि दूरे शृणु तत्र कारणम् ॥ ३७ ॥

अहं इति ॥ किञ्च, मयि, दूरवर्तिनि दूरस्थिते सति, साम्राज्यसुखे अपि राज्यभोगेषु निःस्पृहं आसक्तिरहितं, तव इदं त्वदीयं तावकं, मनः हृदयं, विदन्

जानन् अपि, अहं, त्वां भवन्तं, अपहाय विहाय, चिरं चिरकालं, दूरे दूरदेशे, चरामि पर्यटामि ; (इति) यत् तत्र तस्मिन् विषये, कारणं हेतुं, शृणु आकर्णय ॥

यदैव पूर्वं वनदेवतामुखै-
न्र्यवेदयं साधयितुं त्वदीप्सितम् ।
तदैव लोकोत्तररूपशालिनीं
तवोपनेतुं महिषीमचिन्तयम् ॥ ३८ ॥

यदा इति ॥ पूर्वं पुरा, यदा एव यस्मिन् समये एव, वनदेवतामुखैः वनदेवताद्वारा इत्यर्थः, (अहं), त्वदीप्सितं भवदभिलाषं, साधयितुं निष्पादयितुं, न्यवेदयं प्रत्यजानां इत्यर्थः ; तदा एव तस्मिन् समये एव, लोकोत्तररूपशालिनीं अत्युत्तमसौन्दर्यवतीं, महिषीं भार्यां, तव भवतः, उपनेतुं संपादयितुं विवाहयितुं इत्यर्थः, अचिन्तयं अमन्ये ॥ ३८ ॥

ततोऽनुरूपां तव रूपसंपदः
पुरन्दरस्यापि पुरे मृगीदृशम् ।
अपश्यतः स्वीकृतभङ्गशङ्किनः
कृतं पदं चेतसि चिन्तया मम ॥ ३९ ॥

ततः इति ॥ ततः तदनन्तरं, तव भवतः, रूपसंपदः सौन्दर्यातिशयस्य, अनुरूपां सदृशीं, मृगीदृशं हरिणलोचनां स्त्रियं इति यावत् , पुरन्दरस्य इन्द्रस्य, पुरे नगरे अपि अमरावत्यां अपि इत्यर्थः, अपश्यतः अनवलोकयतः, (अतः एव) स्वीकृतस्य प्रतिज्ञातस्य भङ्गं शङ्कते इति तस्य स्वीकृतभङ्गशङ्किनः प्रतिज्ञाभङ्गभीरोः, मम मे, चेतसि मनसि, चिन्तया उत्कण्ठया, पदं चरणं, कृतं निहितं मे मनः चिन्ताक्रान्तं अभूत् इत्यर्थः ॥ ३९ ॥

कदापि सेवावसरे दिवौकसां
मनोभवं प्राञ्जलिमग्रतः स्थितम् ।
उपास्यमानः सुरसुन्दरीजनैः
कुतूहलादित्थमुवाच वासवः ॥ ४० ॥

**कदापि इति** ॥ कदापि कदाचित्, दिवौकसां देवानां, सेवावसरे उपस्थानसमये, सुरसुन्दरीजनैः देवस्त्रीसमूहैः, उपास्यमानः उपसेव्यमानः, वासवः इन्द्रः, अग्रतः पुरः, प्राञ्जलिं बद्धाञ्जलिपुटं, स्थितं तिष्ठन्तं, मनोभवं मन्मथं, कुतूहलात् कौतुकात्, इत्थं एवं वक्ष्यमाणप्रकारेण इत्यर्थः, उवाच आह स्म ॥

**जगत्त्रयेऽस्मिन्नितरेतराधिकाः**
**सहस्रशः सन्ति मनोरमाः स्त्रियः ।**
**वशंवदं विश्वममूर्वितन्वते**
**त्वयोपदिष्टैस्तु विलासचेष्टितैः ॥ ४१ ॥**

**जगत्त्रये इति** ॥ अस्मिन् एतस्मिन्, जगत्त्रये भुवनत्रितये, इतरेतराधिकाः परस्परविशिष्टाः, मनोरमाः कमनीयाः, स्त्रियः अङ्गनाः, सहस्रशः सहस्रसङ्ख्यया बहुशः इति यावत्, सन्ति वर्तन्ते । किन्तु परन्तु, अमूः एताः स्त्रियः, त्वया भवता, उपदिष्टैः शिक्षितैः, विलासचेष्टितैः विभ्रमव्यापारैः शृङ्गारचेष्टाभिः एव इति यावत्, विश्वं भुवनं, वशंवद वशीकृतं स्वायत्तीकृतं इत्यर्थः, वितन्वते कुर्वते ॥ ४१ ॥

**ततः प्रसूनाशुग वामचक्षुषां**
**विशेषितत्त्वं त्वमवैषि केवलम् ।**
**निरस्य दाक्षिण्यमुदाहरस्व तां**
**गुणैः स्वरूपेण च या विशिष्यते ॥ ४२ ॥**

**ततः इति** ॥ ततः तस्मात् कारणात्, प्रसूनानि कुसुमानि एव आशुगाः बाणाः यस्य तत्संबोधनं प्रसूनाशुग हे पुष्पबाण हे मन्मथ इति यावत्, त्वं केवलं भवान् एकः एव, वामे मनोज्ञे चक्षुषी नयने यासां ताः वामचक्षुषः तासां वामचक्षुषां वामलोचनानां प्रमदानां इति यावत्, विशेषितत्वं विशिष्टतां उत्कृष्टत्वं इति यावत्, अवैषि जानासि । (तस्मात्), या यादृशी नारी, गुणैः आत्मधर्मैः, स्वरूपेण च स्वाकृत्या च, विशिष्यते विशिष्टा वर्तते ; तां तादृशीं ललनां, दाक्षिण्यं पक्षपातित्वं, निरस्य विहाय, उदाहरस्व कथय ॥ ४२ ॥

निजेषु रूपातिशयेषु संशयं
प्रयाति वृन्दारकसुन्दरीजने ।
कुतूहलेनोत्तरलेषु नाकिनां
गणेष्वनङ्गः शतमन्युमब्रवीत् ॥ ४३ ॥

**निजेषु इति** ॥ वृन्दारकसुन्दरीजने सुरस्त्रीनिवहे, निजेषु स्वीयेषु, रूपातिशयेषु अवयवसौन्दर्यविशेषेषु विषये, संशयं सन्देहं, प्रयाति प्राप्ते सति, (तथा), नाकः स्वर्गः एषां अस्ति इति तेषां नाकिनां दिवौकसां, गणेषु समूहेषु, कुतूहलेन औत्सुक्येन, उत्तरलेषु चञ्चलहृदयेषु सत्सु इत्यर्थः, अनङ्गः मदनः, शतमन्युं इन्द्रं, अब्रवीत् प्रत्यभाषत ॥ ४३ ॥

जगत्त्रये किञ्चिदपीह विद्यते
न ते सहस्राक्ष परोक्षतां गतम् ।
तथापि यन्मामनुयोक्तुमीहसे
विधेयतां मे सफलीकरोषि तत् ॥ ४४ ॥

**जगत्त्रये इति** ॥ सहस्रं अक्षीणि यस्य सः तत्संबुद्धि. सहस्राक्ष हे इन्द्र, इह अस्मिन्, जगत्त्रये त्रिभुवने अपि, ते भवतः, परोक्षतां अप्रत्यक्षतां, गतं प्राप्तं त्वया अदृष्टपूर्वं इत्यर्थः, किञ्चित् किमपि वस्तु, न विद्यते न अस्ति । तथा सति अपि, यत् यस्मात्, (त्वं), मां, अनुयोक्तुं प्रष्टुं, ईहसे वाञ्छसि; तत् तस्मात्, मे मम, विधेयतां यथोक्तकारितां प्रेष्यत्वं इति यावत् 'विधेयो विनयग्राही वचने स्थित आश्रवः ।' इत्यमरः, सफलीकरोषि सप्रयोजनीकुरुषे ॥ ४४ ॥

पुरी विदर्भा विदितैव ते विभो
निजैर्गुणैर्या विजिगीषते दिवम् ।
भुनक्ति तां वैरिषु भीमविक्रमः
प्रभुर्भुवो भीम इति प्रथां गतः ॥ ४५ ॥

**पुरी इति** ॥ विभो हे प्रभो, या पुरी, निजैः स्वकीयैः, गुणैः उत्कर्षैः इत्यर्थः, दिवं स्वर्गं अपि, विजिगीषते विजेतुं इच्छति अतिशेते इत्यर्थः; (सा), विदर्भा विदर्भाख्या, पुरी नगरी (कुण्डिनपुरी इति अपरं नाम), ते तव, विदि-

ता एव ज्ञाता खलु । तां तादृशीं पुरीं, वैरिषु शत्रुषु विषये, भीमविक्रमः भीमः भयानकः विक्रमः शौर्यं यस्य सः तादृशः, (तथा), भीमः. इति, प्रथां प्रसिद्धिं, गतः प्राप्तः, भुवः प्रभुः क्षितीशः, भुनक्ति प्रशास्ति ॥ ४५ ॥

सुतां स लेभे कमनीयविग्रहां
प्रसाद्य भक्त्या दमनाह्वयं मुनिम् ।
अतोऽस्य नाम्नैव कृतोपलक्षणा
जनेन साभूद्दमयन्त्युदीरिता ॥ ४६ ॥

**सुतामिति** ॥ सः भीमराजः, दमनाह्वयं दमननामानं, मुनिं ऋषिं, भक्त्या अत्यन्तादरेण, प्रसाद्य सन्तोष्य, कमनीयः मनोहरः विग्रहः शरीरं यस्याः तां कमनीयविग्रहां अतिसुन्दरावयवसंपन्नां, सुतां तनयां, लेभे अवाप । अतः अस्मात् कारणात् एव दमनमुनिप्रसादलब्धत्वात् हेतोः इत्यर्थः, सा भीमतनया, अस्य एतस्य दमनमुनेः, नाम्ना एव आख्यया एव, कृतं उपलक्षणं संज्ञा यस्याः सा कृतो-पलक्षणा विहितसंज्ञा सती, जनेन प्रजाभिः, दमयन्ती, (इति), उदीरिता आहूता, अभूत् आसीत् ॥ ४६ ॥

असौ जगन्नेत्रचकोरचन्द्रिका
विसारिलावण्यतरङ्गदीर्घिका ।
अलङ्कृता नातिचिरात्कृशोदरी
वयोविशेषेण मदेकबन्धुना ॥ ४७ ॥

**असौ इति** ॥ जगन्नेत्रचकोरचन्द्रिका जगतः लोकस्य जनानां इत्यर्थः नेत्रे लोचने एव चकोरौ जीवञ्जीवाख्यपक्षिविशेषौ तयोः चन्द्रिका कौमुदी (यथा चन्द्रिका चकोरपक्षिणा सतृष्ण आस्वाद्यते तथा एषा अपि सकलजननयनैः साभिलाषं अवलोक्यते इत्यर्थः), विसारि विसृत्वरं यत् लावण्यं "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्यु-क्तदेहकान्तिविशेषः तत् एव तरङ्गः ऊर्मिपरंपरा इत्यर्थः तस्य दीर्घिका वापी इव स्थिता इत्यर्थः, असौ एषा, कृश उदरं यस्याः सा कृशोदरी तनुमध्या दम-यन्ती, नातिचिरात् अचिरेण स्वल्पकालात् आरभ्य इत्यर्थः, अहं एव एकः बन्धुः सुहृत् यस्य तेन ( मम एकः मुख्यः बन्धुः तेन वा ) मदेकबन्धुना मदेकसहाय-

भूतेन, वयोविशेषेण विशेषवयोऽवस्थया यौवनेन इत्यर्थः, अलङ्कृता भूषिता, (वर्तते) ॥ ४७ ॥

**कुतूहलेनोत्तरलो यदा विधिः**
**शिरीषपुष्पादपकृष्य मार्दवम् ।**
**करिष्यते काञ्चनयष्टिगोचरं**
**वपुस्तदास्यास्तुलनामुपैष्यति ॥ ४८ ॥**

**कुतूहलेन इति** ॥ यदा यस्मिन् समये, विधिः ब्रह्मा, कुतूहलेन दमयन्तीशरीरसदृशवस्त्वन्तरनिर्माणकौतूहलेन, उत्तरलः आकुलितहृदयः सन् इत्यर्थः, शिरीषपुष्पात् (अत्यन्तमृदोः) शिरीषकुसुमात्, मृदोः भावः तत् मार्दवं सौकुमार्यं, अपकृष्य अपहृत्य, काञ्चनयष्टिगोचरं सुवर्णलताधिष्ठितं, करिष्यते विधास्यति ; तदा तस्मिन् समये एव, अस्याः एतस्याः दमयन्त्याः, वपुः शरीरं, तुलनां उपमां सादृश्यं इति यावत्, उपैष्यति प्राप्स्यति (दमयन्त्याः गात्रं मार्दवे शिरीषकुसुमवत्, शोभायां सुवर्णवत्, तनुत्वे लतावत् च वर्तते इति भावः) ॥

**निसर्गसौरभ्यदरिद्रतां यदा**
**कलापिनः पिच्छभरो विमोक्ष्यति ।**
**मृगीदृशोऽस्याश्चिकुरोत्कराश्रिय-**
**स्तदोपमानं सुलभं भविष्यति ॥ ४९ ॥**

इतः द्वादशभिः कविः दमयन्तीं आकेशपादं वर्णयितुकामः अस्मिन् श्लोके तस्याः कचभारं वर्णयति—

**निसर्गेति** ॥ कलापिनः मयूरस्य, पिच्छभरः बर्हभारः बर्हलोमः इत्यर्थः, निसर्गसौरभ्यदरिद्रतां स्वभावसिद्धं स्वपरिमलदारिद्र्यं स्वपरिमलराहित्यं इत्यर्थः, यदा यस्मिन् काले, विमोक्ष्यति परित्यक्ष्यति ('निसर्गसौरभ्यदरिद्रता यदा कलापिनः पिच्छभरं विमोक्ष्यति ।' इति पाठान्तरं) ; तदा तस्मिन् काले एव, अस्याः अमुष्याः, मृगीदृशः हरिणाक्ष्याः दमयन्त्याः, चिकुरोत्करश्रियः कचभारशोभायाः, उपमानं सादृश्यं, सुलभं सुप्रापं अश्रमसाध्यं इत्यर्थः, भविष्यति स्यात् (तस्याः कचभारः निसर्गपरिमलवत्त्वेन मयूरपिच्छभरमपि अतिशिश्ये इति भावः) ॥ ४९ ॥

सुधामयूखेऽपि कलङ्कदूषिते
प्रदोषसङ्कोचिषु पङ्कजेष्वपि ।
विलज्जितः शिल्पमदोद्धुरो विधि-
र्व्यधत्त तस्याः कमनीयमाननम् ॥ ५० ॥

सुधेति ॥ शिल्पमदोद्धुरः निर्माणविद्यामदोद्धतः, विधिः विधाता, सुधामयूखे अमृतांशौ चन्द्रे इति यावत्, कलङ्कदूषिते कलङ्केन अङ्केन दूषिते कलुषीकृते साति, (तथा), पङ्कजेषु अपि कमलेषु च, प्रदोषसंकोचिषु प्रदोषे सायङ्काले निशागमे इत्यर्थः संकुचन्ति मुकुलीभवन्ति इति तादृशेषु सत्सु, विलज्जितः विशेषेण सञ्जातलज्जः सन्, कमनीयं निष्कलङ्कत्वात् सदाविकासित्वात् च अतीव रुचिरं, तस्याः दमयन्त्याः, आननं वदनं, व्यधत्त निर्ममे ॥ ५० ॥

शरैर्मदीयैरपि कुण्ठता श्रिता
वशीकृतान्तःकरणेषु केषुचित् ।
मृगीदृशोऽस्यास्तु दृगन्तविभ्रमः
करोति तेषामपि धैर्यविच्युतिम् ॥ ५१ ॥

शरैः इति ॥ वशीकृतान्तःकरणेषु वशीकृतं अन्तःकरणं यैः तादृशेषु जितात्मसु इत्यर्थः, केषुचित् योगिषु विषये इत्यर्थः, मदीयैः मामकैः अपि, शरैः बाणैः, कुण्ठता कुण्ठितत्वं मोघत्वं इत्यर्थः, श्रिता प्राप्ता । अस्याः, मृगीदृशः मृगाक्ष्याः दमयन्त्याः, दृगन्तविभ्रमः तु अपाङ्गविलासः पुनः, तेषां अपि तादृशानां योगिनां अपि, धैर्यविच्युतिं मनस्स्थैर्यहानिं, करोति उत्पादयति ॥५१॥

कुरङ्गमुत्सङ्गशयं शरद्विधु-
र्विधूय धत्ते यदि तद्दृशौ परम् ।
मृगेक्षणायाश्चदुलाक्षमाननं
तदा निकामं तुलनामुपैष्यति ॥ ५२ ॥

कुरङ्गमिति ॥ शरदि विधुः शरद्विधुः शरत्कालचन्द्रः, उत्सङ्गे अङ्के शेते इति तं उत्सङ्गशयं तं स्वोत्सङ्गवर्तिनं, कुरङ्गं हरिणं, विधूय व्यपनीय, तद्दृशौ परं तस्याः दमयन्त्याः दृशौ नयने केवलं, धत्ते यदि धारयति चेत्, तदा तर्हि,

चटुले चपले अक्षिणी यस्य तत् चटुलाक्षं चपललोचनं, मृगेक्षणायाः दमयन्त्याः, आननं मुखं, निकामं भृशं, तुलनां सादृश्यं, उपैष्यति प्राप्स्यति ॥ ५२ ॥

निमीलयन्त्यारुणरत्नदीधितिं
विलज्जयन्त्या नवपल्लवश्रियम् ।
समुल्लसन्त्याधरकान्तिसंपदा
विकासि बन्धूकमधःकरोति सा ॥ ५३ ॥

**निमीलयन्त्या इति** ॥ सा दमयन्ती, अरुणरत्नदीधितिं अरुणरत्नस्य पद्मरागमणेः दीधितिं कान्तिं, निमीलयन्त्या निमज्जयन्त्या अधःकुर्वत्या इत्यर्थः, (तथा), नवपल्लवश्रियं प्रत्यग्रकिसलयशोभां, विलज्जयन्त्या त्रपाविशिष्टां कुर्वत्या अपहसन्त्या इति यावत्, समुल्लसन्त्या समुज्ज्वलन्त्या, अधरकान्तिसंपदा अधरयोः ओष्ठयोः कान्तिसपदा शोभासमृद्ध्या, विकासि विकसनशीलं, बन्धूकं बन्धुजीवककुसुमं 'रक्तकस्तु बन्धूको बन्धुजीवकः ।' इत्यमरः, अधःकरोति धिक्-कुरुते अतिशेते इत्यर्थः ॥ ५३ ॥

इमौ मृदू निर्भरमस्मि कर्कशं
स्थितिः सहाभ्यां मम नैव सांप्रतम् ।
इतीव तस्याः परिणाहसंपदा
भुजौ विदूरं नुदति स्तनद्वयम् ॥ ५४ ॥

**इमौ इति** ॥ 'इमौ एतौ भुजौ, मृदू मार्दवसंपन्नौ, (स्तः) । (अहं तु), निर्भरं नितान्तं, कर्कशं कठिनं, अस्मि । (तस्मात्), आभ्यां सह एताभ्यां मृदुभ्यां भुजाभ्यां साकं, मम मे, स्थितिः संवासः, नैव सांप्रतं युक्ता न खलु ।' इति हेतोः इव, तस्याः दमयन्त्याः, स्तनद्वयं कुचयुग्मं, परिणाहसंपदा परिणाहस्य विशालतायाः वैपुल्यस्य इति यावत् संपदा अतिशयेन, भुजौ तस्याः बाहू, विदूरं अतिदूरं अत्यन्तं इत्यर्थः, नुदति प्रेरयति क्षिपति इति यावत् ॥ ५४ ॥

तदीयमालोहितपाणिपल्लवं
शिरीषमालामृदुलं भुजद्वयम् ।
विडम्बयत्याति मृणालकाण्डयो-
रधोमुखस्मेरसरोजयोः श्रियम् ॥ ५५ ॥

**तदीयमिति** ॥ आलोहितपाणिपल्लवं आलोहितौ पाणिपल्लवौ यस्य तत् तादृशं आरक्तहस्तकिसलयं, (तथा), शिरीषमालामृदुलं शिरीषकुसुमनिर्मितहारवत् अत्यन्तमार्दवयुक्तं, तस्याः दमयन्त्याः इदं तदीयं, भुजद्वयं बाहुयुगलं ( कर्तृ ), अधोमुखस्मेरसरोजयोः अधोमुखे अधोनिक्षिप्ताग्रभागे स्मेरे विकचे सरोजे ययोः तौ तादृशयोः मृणालकाण्डयोः बिसदण्डयोः, श्रियं शोभां, विडम्बयत् परिहसत् सत्, भाति प्रकाशते ॥ ५५ ॥

**विधाय मध्यं सुतनोस्तथा तनुं**
**बभूव तद्भङ्गभयाकुलो विधिः ।**
**यदेष पश्चात्त्रिवलीमिषादमुं**
**चकार हैमैर्वलयैर्वृतं त्रिभिः ॥ ५६ ॥**

**विधायेति** ॥ विधिः विधाता, सुतनोः शोभनाङ्ग्याः दमयन्त्याः, मध्यं अवलग्नं 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः, तथा तादृक्प्रकारेण, तनुं कृशं, विधाय कृत्वा, तद्भङ्गभयाकुलः तस्य मध्यस्य भङ्गः छेदः तस्मात् भयं तेन आकुलः व्याप्तः पीडितः वा, बभूव आसीत् । यत् यस्मात् कारणात्, एषः विधिः, पश्चात् तदनन्तरं, अमुं एतं मध्यं, त्रिवलीमिषात् वलित्रयव्याजात्, त्रिभिः, हैमैः स्वर्णमयैः, वलयैः मण्डलैः आवेष्टनैः इति यावत्, वृतं वेष्टित, चकार विदधे ॥ ५६ ॥

**परस्परस्यास्पदलङ्घनैषिणो-**
**र्निवारणाय स्तनयोर्मृगीदृशः ।**
**तनूरुहश्रेणिमिषान्नवं वयः**
**करोति सीमानमिवानयोरधः ॥ ५७ ॥**

**परस्परस्येति** ॥ परस्परस्य इतरेतरस्य, आस्पदलङ्घनैषिणोः स्थानातिक्रमणासक्तयोः, मृगीदृशः दमयन्त्याः, स्तनयोः कुचयोः, निवारणाय निरोधाय स्तनौ निवारयितुं इत्यर्थः, नवं वयः तारुण्यं इत्यर्थः (कर्तृ), तनूरुहश्रेणिमिषात् रोमावलीव्याजात्, अनयोः एनयोः स्तनयोः, अधः अधस्तात् अधःप्रदेशे इति यावत्, सीमानं अवधिं, करोति इव विरचयति इव ॥ ५७ ॥

किमुच्यतेऽस्याः प्रथिमा नितम्बयो-
र्यदत्र दृष्टिः पतिता विलासिनाम् ।
चिरं परिभ्रम्य कुतूहलाद्भृशं
श्रमादिवान्यत्र न गन्तुमिच्छति ॥ ५८ ॥

**किं इति** ॥ अस्याः दमयन्त्याः, नितम्बयोः कटिपश्चाद्भागयोः, प्रथिमा पृथुत्वं वैपुल्यं इति यावत्, किं कीदृक् ( कथं वा), उच्यते वर्ण्यते इत्यर्थः । यत् यस्मात्, अत्र अस्मिन् नितम्बे, पतिता क्षिप्ता, विलासिनां विलसनशीलानां कामिनां इति यावत्, दृष्टिः नयनं, कुतूहलात् औत्सुक्यातिशयात्, चिरं चिरकालं, परिभ्रम्य विलुठ्य, भृशं अत्यन्त, श्रमात् इव श्रान्त्या इव, अन्यत्र नितम्बव्यतिरिक्तावयवे, गन्तुं यातुं अन्यं अवयवं द्रष्टुं इत्यर्थः, न इच्छति न अभिलषति ॥

निरस्तरम्भातरुरामणीयकं
तदीयमूरुद्वितयं विचिन्तयन् ।
अनादरोऽहं विषयान्तरे मुहुः
करोम्यसूयाकुटिलेक्षणां रतिम् ॥ ५९ ॥

**निरस्तेति** ॥ निरस्तरंभातरुरामणीयकं निरस्तं दूरीकृत रंभातरोः कदलीवृक्षस्य रामणीयकं सौन्दर्यं येन तत् तादृश, तदीयं दमयन्तीसम्बन्धि, ऊरुद्वितयं सक्थियुगलं (कर्म), विचिन्तयन संस्मरन्, अहं, अन्यः विषयः विषयान्तरं तस्मिन् विषयान्तरे अन्यस्मिन् पदार्थे, अनादरः आसक्तिरहितः सन्, रतिं मत्प्राणवल्लभां रतिदेवीं, मुहुः पुनः पुनः, असूयाकुटिलेक्षणां असूयया ईर्ष्यया ( स्पर्धया वा ) कुटिले वक्रे ईक्षणे यस्याः तां तादृशीं, करोमि विदधे ॥ ५९ ॥

विकस्वरैर्लोहितपङ्कजैस्समं
विलोक्य पादद्वितयं दमस्वसुः ।
गुणाधिकं कर्तुमिदं समुत्सुक-
श्चकार धाता नखमौक्तिकाङ्कितम् ॥ ६० ॥

**विकस्वरैः इति** ॥ धाता ब्रह्मा, दमो नाम दमयन्तीभ्राता तस्य स्वसा भगिनी तस्याः दमस्वसुः दमयन्त्याः, पादद्वितयं चरणयुगलं विकस्वरैः विक-

सितैः, लोहितपङ्कजैः रक्तकमलैः, समं सदृशं, विलोक्य अवेक्ष्य, इदं एतत् दमयन्तीपादद्वितयं, गुणाधिकं उत्कृष्टगुणशालि, कर्तुं विधातुं, समुत्सुकः साभिलाषः सन्, नखमौक्तिकाङ्कितं नखाः नखराः एव मौक्तिकानि मुक्ताफलानि तैः अङ्कितं चिह्नितं, चकार कृतवान् ॥ ६० ॥

अशेषलावण्यनिधानभाजनं
जगत्त्रयीमोहनसिद्धभेषजम् ।
प्रजासृजः शिल्पमहीरुहः फलं
वपुस्तदीयं प्रतिभाति मे हृदि ॥ ६१ ॥

अशेषेति ॥ तदीयं तस्याः सबन्धि, वपुः शरीरं, अशेषलावण्यनिधानभाजन अशेष समस्त यत् लावण्य सौन्दर्यशोभा तस्य निधानभाजन निक्षेपपात्र, जगत्त्रयीमोहनसिद्धभेषज जगत्त्रय्याः त्रिभुवनस्य मोहन चित्तभ्रान्तिकारक सिद्धभेषज सिद्धौषधं, प्रजाः प्राणिनः सृजति इति प्रजासृट् तस्य प्रजासृजः विधातुः, शिल्पमहीरुहः निर्माणकलातरोः, फल फलरूप च, मे मम, हृदि चित्ते, प्रतिभाति सलक्ष्यते ॥' ॥ ६१ ॥

इति स्वयं तां स्मृतिजन्मना स्तुतां
विचिन्तयन्तः पृथिवीन्द्रनन्दिनीम् ।
स्वधैर्यबन्धेष्वभवन्ननीश्वराः
पुरन्दराद्याः ककुभामधीश्वराः ॥ ६२ ॥

इति इति ॥ इति पूर्वोक्तप्रकारेण, स्मृतौ जन्म यस्य तेन स्मृतिजन्मना मनोभवेन, स्वय स्वतः एव, स्तुतां वर्णिता, तां तादृशी, पृथिवीन्द्रनन्दिनी भीम राजतनयां दमयन्ती, विचिन्तयन्तः ध्यायन्त. सन्तः, पुरन्दराद्याः इन्द्रादयः, ककुभां अधीश्वराः दिक्पालकाः, स्वधैर्यबन्धेषु निजमनःस्थैर्यनियन्त्रणेषु विषये, अनीश्वराः अशक्ताः, अभवन् आसन् ॥ ६२ ॥

तथागतांस्तानवलोक्य दिक्पतीन्
विमृश्य वाक्यं रतिवल्लभस्य च ।
परस्परस्यापि मुखावलोकने
विलज्जमानाः सुरसुभ्रुवोऽभवन् ॥ ६३ ॥

तथागतान् इति ॥ तथागतान् तादृशीं अवस्थां आपन्नान्, तान् दिक्पतीन् दिशापालान्, अवलोक्य समवेक्ष्य, रतिवल्लभस्य मन्मथस्य, वाक्यं वचनं, विमृश्य च पर्यालोच्य च, सुरसुभ्रुवः सुरस्त्रियः, परस्परस्य अन्योन्यस्य, मुखावलोकने अपि वदननिरीक्षणे अपि, विलज्जमानाः संजातलज्जाः, अभवन् ॥ ६३ ॥

शरत्तुषारद्युतिबिम्बसोदरं
रिलोत्तमायास्तमसा वृतं मुखम् ।
स्वदेहसौन्दर्यविशेषसंभृतो
मदालसायाः शिथिलोऽभवन्मदः ॥ ६४ ॥

सुरसुन्दरीणां लज्जाप्रकारमेव आह—

शरदिति ॥ शरदि शरत्काले यः तुषारद्युतिः शीतकिरणः चन्द्रः इति यावत् तस्य बिम्बस्य मण्डलस्य सोदरं सदृशं इत्यर्थः शरच्चन्द्रनिभं, तिलोत्तमायाः तन्नाम्न्याः अप्सरस्त्रियाः, मुखं वदनं, तमसा अन्धकारेण मालिन्येन इत्यर्थः, वृतं व्याप्तं, (अभवत्)। (तथा), स्वस्य देहस्य यः सौन्दर्यविशेषः शोभातिशयः तेन संभृतः समुत्पन्नः, मदालसायाः तदाख्यायाः सुराङ्गनायाः, मदः दर्पः, शिथिलः विश्लथः विशीर्णः इति यावत्, अभवत् जातः ॥ ६४ ॥

अभूदभिध्यानपरेव निश्चला
सुलोचना मुद्रितलोचनोत्पला ।
प्रदीर्घनिःश्वासविधूसराधरा
स्थिता सखीमध्यगता सुमध्यमा ॥ ६५ ॥

अभूत् इति ॥ सुलोचना सुलोचनाख्या अपरा सुराङ्गना, निश्चला निश्चेष्टा स्तब्धा इति यावत्, (तथा), मुद्रिते निमीलिते लोचनोत्पले नयनकमले यस्याः सा तथा भूता च सती, अभिध्यानपरा इव योगनिष्ठातत्परा इव, अभूत् आसीत्। सुमध्यमा तन्नाम्नी काचित् सुराङ्गना, सखीमध्यगता सखीनां आलीनां मध्य-गता मध्यवर्तिनी सती, प्रदीर्घनिःश्वासविधूसराधरा प्रदीर्घैः अत्यायतैः निः-श्वासैः निश्वसितैः विधूसरौ आपाण्डू निःश्वसितानां अत्युष्णतया विवर्णौ इत्यर्थः अधरौ रदनच्छदौ यस्याः सा तथाभूता, स्थिता अवर्तत ॥ ६५ ॥

अपि त्रिलोकीबहुमानभाजनं
न मेनकामानयदात्मनो वपुः ।
निवेश्य नेत्रद्वितयं स्वपादयो-
रलम्बुसालम्बत पार्श्वगां सखीम् ॥ ६६ ॥

अपि इति ॥ मेनका तदाख्या स्वर्वेश्या, त्रिलोकीबहुमानभाजनं अपि त्रिभुवनस्यापि अभिनन्दनपात्रं अपि, आत्मनः स्वस्याः, वपुः शरीरं, न अमानयत् न बहुमेने । अलम्बुसा तदाख्या अप्सरस्स्त्री, नेत्रद्वितयं नयनयुगलं, स्वपादयोः निजचरणयोः, निवेश्य निक्षिप्य लज्जाधिक्यात् अधोदत्तदृष्टिः सती इत्यर्थः, पार्श्वगां स्वसमीपस्थां, सखीं वयस्यां, आलम्बत अवष्टभ्य स्थिता ॥६६॥

अनिन्ददाशु त्रिदशाभिनन्दितं
कलावती केलिकलासु कौशलम् ।
अशेषबृन्दारकदृष्टिबन्धनं
सुविभ्रमा विस्मरति स्म विभ्रमम् ॥ ६७ ॥

अनिन्दत् इति ॥ कलावती नाम सुराङ्गना, त्रिदशाभिनन्दितं त्रिदशैः देवैः अभिनन्दितं अभिष्टुतं, केलिकलासु. लीलाकलासु, कौशलं स्वनैपुण्यं, आशु शीघ्रं, अनिन्दत् अगर्हयत् । सुविभ्रमा तन्नाम्नी सुरस्त्री, अशेषबृन्दारकदृष्टिबन्धनं समस्तसुरनेत्रनिरोधकं तन्नयनाकर्षकं इत्यर्थः, विभ्रमं विलासं शृङ्गारचेष्टितं इत्यर्थः, विस्मरति स्म व्यस्मरत् ॥ ६७ ॥

कपोलबिम्बं परिघूर्णितालकं
निधाय पङ्केरुहसोदरे करे ।
चिराय चित्रार्पितयेव निश्चलं
स्थितं सखीसंसदि चित्रलेखया ॥ ६८ ॥

कपोलबिम्बं इति ॥ चित्रलेखया चित्रलेखाख्यया सुरयुवत्या, परिघूर्णितालकं परिघूर्णिताः परिस्पन्दमानाः चञ्चलाः इति यावत् अलकाः चूर्णकुन्तलाः यस्मिन् तादृशं, कपोलबिम्बं गण्डमण्डलं, पङ्केरुहसोदरे कमलसदृशे, करे पाणितले, निधाय निक्षिप्य, सखीसंसदि आलिनिवहमध्ये, चित्रार्पितया

इव चित्रे आलेख्ये अर्पितया लिखितया इव, निश्चलं निश्चेष्टं यथा तथा, चिराय चिरकालं, स्थितं अस्थायि ॥ ६८ ॥

निरायताभिः श्वसितानिलोर्मिभि-
विधुन्वती केलिसरोरुहं मुहुः ।
हृतेव कासारजलात्कुमुद्वती
शशिप्रभासीत्तरसैव निष्प्रभा ॥ ६९ ॥

**निरायताभिः इति** ॥ शशिप्रभा तदाख्या काचित् अपरा, निरायताभिः अत्यन्तदीर्घाभिः, श्वसितानिलोर्मिभिः निःश्वासपवनपरम्पराभिः इत्यर्थः, केलिसरोरुहं स्वहस्तधृतं क्रीडापद्मं, मुहुः पुनः पुनः, विधुन्वती कम्पयन्ती सती, कासारजलात् कासारस्य सरसः जलात् सलिलात्, हृता उद्धृता, कुमुद्वती इव कैरविणी इव कुमुदवृन्दमिव इत्यर्थः, तरसा एव क्षिप्रं एव, निष्प्रभा निस्तेजस्का विवर्णवदना इत्यर्थः, आसीत् बभूव ॥ ६९ ॥

अधारयद्वासवधैर्यलोपिनी
न जीवितेऽपि स्मरजीविता मनः ।
अहारयत्त्र्यम्बकचित्तहारिणी
विदग्धतां गीतिषु मञ्जुगीतिका ॥ ७० ॥

**अधारयत् इति** ॥ वासवधैर्यलोपिनी इन्द्रमनःस्थैर्यविनाशिनी, स्मरजीविता तदाख्या अपरा, जीविते अपि स्वप्राणधारणे अपि, मनः चित्तं, न अधारयत् न धारयामास स्वजीवनिरपेक्षा आसीत् इत्यर्थः । त्रीणि अम्बकानि नेत्राणि यस्य सः त्र्यम्बकः रुद्रः तस्य चित्तं हरति इति त्र्यम्बकचित्तहारिणी शिवस्तवनकाले स्वगीतिमाधुर्येण तस्य मनः अपि वशीकुर्वती इत्यर्थः, मञ्जुगीतिका तन्नाम्नी सुराङ्गना, गीतिषु गानेषु विषये, विदग्धतां स्ववैदग्ध्यं स्वनैपुण्यं इति यावत्, अहारयत् अमोचयत् पर्यत्यजत् इत्यर्थः ॥ ७० ॥

लास्येष्वप्सरसां निरस्य कुतुकं सञ्चिन्त्य भैमीं मुहुः
स्वं स्वं धाम पुरन्दरप्रभृतयः सर्वे ययुर्निर्जराः ।

त्वत्कार्यं हृदये निधाय सपदि प्राप्तस्त्वरां भूयसीं
क्षोणीन्द्र त्रिदिवादवातरमहं रम्यां विदर्भामनु ॥ ७१ ॥

लास्येषु इति ॥ क्षोणीन्द्र हे नलमहीपते, पुरन्दरप्रभृतयः इन्द्रादयः, सर्वे समस्ताः, निर्जराः देवाः, भैमीं भीमराजसुतां दमयन्तीं, मुहुः पुनः पुनः, संचिन्त्य संस्मृत्य, अप्सरसां पूर्वोक्तानां सुराङ्गनानां, लास्येषु नृत्येषु, कुतुकं औत्सुक्यं, निरस्य विहाय, स्व स्व निज निज, धाम निलय, ययुः जग्मुः । अहं अपि, त्वत्कार्यं त्वद्विषये मया कर्तव्यं कर्म इत्यर्थः, हृदये मनसि, निधाय निवेश्य संचिन्त्य इत्यर्थः, सपदि क्षिप्रं, भूयसीं अत्यधिका, त्वरां वेगं, प्राप्तः उपगतः सन् . तृतीयः दिवः लोकः त्रिदिवः तस्मात् त्रिदिवात् स्वर्गलोकात् ' स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः ' इत्यमरः, रम्यां रमणीयां, विदर्भां अनु कुण्डनपुरीं प्रति तत्समीपं वा, अवातरं अवारोहम् ॥ शार्दूलविक्रीडितं वृत्तम् । तल्लक्षण तु — ' सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥ ' इति ॥ ७१ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते हंसदर्शन नाम
द्वितीयः सर्गः ॥



# तृतीयः सर्गः ।

तास्तास्ततो दिविषदामवगाह्य वीथीः
पाथोमुचामपि पथस्तरसावतीर्य ।
सौधैः सुधांशुधवलैस्त्रिदिवं हसन्ती
दृष्टा मया नरपते नगरी विदर्भा ॥ १ ॥

**ताः इति** ॥ नरपते भोः नलमहाराज, ततः अनन्तर, ताः ताः बहुविधाः इत्यर्थः, दिविषदां देवानां, वीथीः मार्गान् इत्यर्थः, अवगाह्य प्रविश्य, पाथः जल 'कबन्धमुदक पाथः' इत्यमरः मुञ्चन्ति वर्षन्ति इति पाथोमुचः मेघाः तेषां, पथः मार्गान् अपि मेघमण्डलमपि इत्यर्थः, तरसा वेगेन शीघ्र वा, अवतीर्य अवगाह्य, मया(कर्त्रा), सुधांशुधवलैः चन्द्रवत् अतिशुभ्रैः, सौधैः राजभवनैः 'सौधोऽस्त्री राजसदन' इत्यमरः, प्रासादैः इति यावत्, त्रिदिव स्वर्गलोक, हसन्ती अपहसन्ती अतिशयाना इत्यर्थः, विदर्भा विदर्भाख्या, नगरी पुरी कुण्डिनपुरी इत्यर्थः, दृष्टा अदर्शि ॥ अस्मिन् सर्गे प्रायेण **वसन्ततिलकावृत्तम्** ॥ तल्लक्षणन्तु— 'उक्ता वसन्ततिलका **तभजा जगौ गः**' इति ॥ १ ॥

भैमीविलोकनसमुत्सुकमानसेन
तस्यां मया विचरता क्वचिदप्यदर्शि ।
मध्ये विलाससरसः स्फटिकावनद्धं
नातिप्रभूतपरिचारमगारमेकम् ॥ २ ॥

**भैमी इति** ॥ भैमीविलोकनसमुत्सुकमानसेन भैम्याः दमयन्त्याः विलोकने दर्शने समुत्सुकं अत्यासक्तं मानस मनः यस्य तेन तादृशेन ( भैमीविलोकनसमुत्सुकं च तत् मानसं च तेन इति वा ) (अतः एव), तस्यां विदर्भायां, विचरता पर्यटता, मया, क्वचित् कुत्रचित् प्रदेशे, विलाससरसः केलीकासारस्य, मध्ये अभ्यन्तरे, स्फटिकावनद्धं स्फटिकशिलानिर्मितं, नातिप्रभूतपरिचारं नाति-

प्रभूताः नातिबहवः परिमिताः इत्यर्थः परिचाराः चेट्यः इत्यर्थः यस्मिन् तत्, तादृशं, एकं किमपि, अगारं गृहं 'निशान्तवस्त्यसदनभवनागारमन्दिरम् ।' इत्यमरः, अदर्शि अवालोकि ॥ २ ॥

आकल्पशून्यवपुषं मणिभूषणेषु
विद्वेषिणीं प्रियसखीभिरुपाहृतेषु ।
आलेख्यवत्फलकमेव निरीक्षमाणां
तां तत्र भीमनृपतेस्तनयामपश्यम् ॥ ३ ॥

आकल्पेति ॥ (अहं), तत्र तस्मिन् गृहे, आकल्पशून्यवपुषं आकल्पैः अलङ्कारैः शून्यं रहितं वपुः शरीरं यस्याः तां तादृशीं विरहवेदनाजनितया अरत्या अनलंकृतशरीरां इत्यर्थः, (तथा), प्रियसखीभिः प्रियवयस्याभिः, उपाहृतेषु उपनीतेषु, मणिभूषणेषु रत्नाभरणेषु विषये, विद्वेषिणीं अत्यन्तद्वेषवतीं अनासक्तां इत्यर्थः, (तथा), आलेख्यं चित्रं अस्मिन् अस्ति इति आलेख्यवत्, फलक एव चित्रफलकं एव, निरीक्षमाणां अवलोकयन्तीं, तां तादृशीं, भीमनृपतेः भीमराजस्य, तनयां सुतां दमयन्तीं, अपश्यं अद्राक्षम् ॥ ३ ॥

आकर्णिताधिकगुणामवलोक्य भैमीं
भूषां विनापि नयनोत्सवमावहन्तीम् ।
संभावितं हृदि मया मदनस्य जाड्यं
लावण्यवर्णनविधौ वरवर्णिनीनाम् ॥ ४ ॥

आकर्णितेति ॥ आकर्णिताधिकगुणां श्रुताधिकगुणसंपन्नां ये दमयन्तीगुणाः कामेन इन्द्रसमक्षं उपवर्णिताः मया श्रुताः तेभ्योऽपि अधिकगुणसंपन्नां इत्यर्थः, (तथा), भूषां विनापि मण्डनं विहायापि आभरणैः विनापि इत्यर्थः, नयनोत्सवं नेत्रानन्दं, आवहन्तीं विदधतीं, भैमीं दमयन्तीं, अवलोक्य वीक्ष्य, मया, वरवर्णिनीनां उत्तमस्त्रीणां 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः, लावण्यवर्णनविधौ सौन्दर्योपवर्णनरूपकर्मणि, मदनस्य मन्मथस्य, जाड्यं बुद्धिमान्द्यं, हृदि मम हृदये, संभावितं अभ्यूहितम् ॥ ४ ॥

किञ्चिद्विषण्णवदनामिव तां विभाव्य
तत्रावमिक्रिकलैरवधारयिष्यन् ।

आसन्नपङ्कजवनेषु निबद्धनीडैः
प्रक्रीडितोऽस्मि सह तत्र विलासहंसैः ॥ ५ ॥

**किञ्चिन् इति** ॥ तां दमयन्तीं, किञ्चित् मनाक्, विषण्णहृदयां इव विषण्णं विषादयुक्तं हृदयं मनः यस्याः तां तादृशीं इव खिन्नमनस्कां इव इति यावत्, विभाव्य आशङ्क्य, इङ्गितलवैः इङ्गितानि निगूढभावावबोधकचेष्टाः ('चेष्टा निगूढभावावबोधिका कथितेङ्गितम्' इति आलङ्कारिकाः) तेषां लवाः एकदेशाः तैः, तद्भावं तस्याः दमयन्त्याः भावं अभिप्रायं, अवधारयिष्यन् अवगमिष्यन् सन् अवजिगमिषुः सन् इत्यर्थः, (अहं), तत्र सरसि, आसन्नपङ्कजवनेषु समीपवर्तिपद्मषण्डेषु, निबद्धनीडैः निबद्धानि निर्मितानि नीडानि कुलायाः यैः तैः तादृशैः 'कुलायो नीडमस्त्रियां' इत्यमरः, विलासहंसैः सह विलासार्थं क्रीडार्थं हंसाः विलासहंसाः तैः साकं, प्रक्रीडितः विहृतवान्, अस्मि आसं इत्यर्थः भूतार्थे लट् । यद्वा—अस्मि इति अहमर्थे अव्ययं ॥ ५ ॥

मन्दादरा मधुरभाषिणि केलिकीरे
निष्कौतुका कलरुतास्वपि शारिकासु ।
आसाद्य मां वचसि मानुषनिर्विशेषं
किञ्चित्कुतूहलवती मयि सा तदासीत् ॥ ६ ॥

**मन्दादरा इति** ॥ मधुरं भाषते इति तस्मिन् मधुरभाषिणि मनोज्ञभाषणशीले, केलिकीरे क्रीडाशुके 'कीरशुकौ समौ' इत्यमरः, मन्दः आदरः यस्याः सा मन्दादरा अल्पाभिलाषा आसक्तिरहिता इत्यर्थः, कलानि अव्यक्तमधुराणि रुतानि कूजितानि यासां तासु कलरुतासु, शारिकासु अपि पक्षिविशेषेषु च, निष्कौतुका विगताभिलाषा, सा दमयन्ती, तदा तस्मिन् समये, वचसि वाचि भाषणविषये इत्यर्थः, मानुषनिर्विशेषं मानुषात् मर्त्यात् निर्विशेषः भेदरहितः तं मानुषनिर्विशेषं मनुष्यसदृशं इत्यर्थः, मां, आसाद्य उपगम्य, मयि विषये, किंचित् मनाक्, कुतूहलवती कौतुकाविष्टा, आसीत् अभवत् ॥ ६ ॥

अत्रान्तरे सरभसं समुपेत्य काचि-
दन्तर्विजृम्भितविषादवशंवदायाः ।

**तस्याः क्षितीन्द्रदुहितुः सविधं प्रपन्ना**
**प्रेमानुबन्धमधुरां गिरमित्यवादीत् ॥ ७ ॥**

**अत्रान्तरे इति** ॥ अत्रान्तरे अस्मिन् समये, काचित् काचन सखी, सरभस सत्वर, समुपेत्य समुपगम्य, अन्तः हृदये विजृंभितः प्रवृद्धः यः विषादः व्यसन तस्य वशवदायाः वशीभूतायाः, तस्याः, क्षितीन्द्रदुहितुः भीमराजसुतायाः, सविध अन्तिकम्, प्रपन्ना प्राप्ता सती, इति वक्ष्यमाणां, प्रेमानुबन्धमधुरां प्रेम्णः प्रीतेः अनुबन्धः अनुश्लेषः तेन मधुरा मनोज्ञा तां तादृशी, गिरं वाचं, अवादीत् अवोचत् ॥ ७ ॥

**शून्या कुरङ्गमदपत्रविशेषकेण**
**गण्डस्थली परिणमल्लवलीविपाण्डुः ।**
**नैषा कथं विषहते विरहं कृशाङ्गि**
**शोणारविन्दसुहृदः करपल्लवस्य ॥ ८ ॥**

**शून्या इति** ॥ कृशानि अङ्गानि यस्याः सा तत्सबुद्धिः कृशाङ्गि हे तनुगात्रि दमयन्ति, कुरङ्गमदपत्रविशेषकेण कुरङ्गमदः मृगमदः (गन्धद्रव्यविशेषः) कस्तूरी इति यावत् 'मृगनाभिर्मृगमदः कस्तूरी' इत्यमरः तेन विरचितः यः पत्रविशेषकः मकरिकादिपत्ररचना तेन, शून्या विहीना, (तथा) परिणमल्लवलीविपाण्डुः परिणमन्ती पक्वतां गच्छन्ती या लवली लताविशेषः तद्वत् विपाण्डुः पाण्डुरवर्णा, एषा इयं, गण्डस्थळी तव कपोलप्रदेशः, शोणारविन्दसुहृदः रक्तपङ्केरुहसदृशस्य, करपल्लवस्य त्वत्पाणिकिसलयस्य, विरह वियोगं, कथ कुतः, न विषहते न क्षमते । किमर्थं त्व सदैव करतलकलितकपोला विषण्णा इव लक्ष्यसे इति भावः ॥ ८ ॥

**आवर्जितैर्निजकरेण सखि त्वदीयै-**
**र्भृङ्गारवारिभिरभूदभिवर्धिता या ।**
**उज्जृम्भमाणमुकुला नवमालिकापि**
**नैषा कथं वितनुते नयनोत्सवं ते ॥ ९ ॥**

**आवर्जितैः इति** ॥ सखि हे वयस्ये, या (नवमालिका), निजकरेण स्वहस्तेन एव, आवर्जितैः सिक्तैः, त्वदीयैः तावकैः, भृङ्गारवारिभिः कनकमयक-

लशविशेषस्थजलैः 'भृङ्गारः कनकालुका' इत्यमरः, अभिवर्धिता परिपोषिता, अभूत् आसीत्; (सा), एषा इयं पुरोवर्तिनी इत्यर्थः, नवमालिका सप्तलाख्यमल्लिकालताविशेषः 'सप्तला नवमालिका' इत्यमरः, उज्जृंभमाणमुकुला अपि विकसत्कुड्मला अपि, ते तव, नयनोत्सवं नेत्रानन्दं, कथं कस्मात् कारणात्, न वितनुते न उत्पादयति ॥ ९ ॥

आलक्ष्यमुग्धमुकुलां सहकारशाखां
तन्वीं निपीडयति निष्करुणः पिकोऽयम्।
व्यालोलमञ्जुवलयस्वनमांसलाभि-
र्नैनं निवारयसि किं करतालिकाभिः ॥ १० ॥

**आलक्ष्येति** ॥ अयं एषः, पिकः कोकिलः (युवा च व्यज्यते), निष्करुणः निर्दयः सन्, आलक्ष्यमुग्धमुकुलां आलक्ष्याणि ईषत् दृश्यानि मुग्धानि सुन्दराणि मुकुलानि कुड्मलानि यस्याः तां तादृशीं (किंचिद्दृश्यमानस्तनकुड्मलां अतिमुग्धस्वभावां इति च गम्यते); तन्वीं अतिकृशां (तन्वङ्गीं इति च गम्यते) सहकारशाखां सहकारस्य अतिसौरभचूतवृक्षस्य 'सहकारोऽतिसौरभः' इत्यमरः, शाखां विटपं स्त्रियं इति च गम्यते, निपीडयति नितरां क्लेशयति गाढालिङ्गनादिना धर्षयति इति च गम्यते। अत्र केनचित् निष्करुणेन दुष्टयूना अनतिपरिणतकुचकुड्मलायाः अतिमुग्धायाः अङ्गनायाः बलात्कारेण धर्षणं व्यज्यते। एवं एतादृशं पिकं, (त्वं), व्यालोलाः व्याघूर्णमानाः ये मञ्जुवलयाः मनोज्ञकङ्कणानि तेषां स्वनः शब्दः तेन मांसलाः अतिघनाः अतिगम्भीराः इति यावत् ताभिः तादृशीभिः, करतालिकाभिः करास्फोटशब्दैः, किं किमर्थं, न निवारयसि न निषेधयसि ॥ १० ॥

आमोदलोलुपतया परिहृत्य पुष्पं
पुष्पन्धयाः सरभसं समुपेत्य दूरात्।
पर्याकुलाः पुनरमी विनिवर्तमानाः
संसूचयन्ति तव निःश्वसितेषु तापम् ॥ ११ ॥

**आमोदेति** ॥ अमी एते, पुष्पन्धयाः भ्रमराः, आमोदलोलुपतया त्वन्निःश्वासपरिमलासक्ततया, पुष्पं कुसुमानि (जातौ एकवचनं), दूरात् दूरतः,

परिहृत्य संत्यज्य, सरभस सत्वरं, समुपेत्य (त्वन्मुखकमलं) उपगम्य, पर्याकुलाः उद्विग्नाः, पुनः भूयोऽपि, निवर्तमानाः प्रत्यागच्छन्तः सन्तः, तव भवत्याः, निःश्वसितेषु निःश्वासेषु, तापं अत्यन्तौष्ण्यं, संसूचयन्ति आवेदयन्ति प्रकाशयन्ति इत्यर्थः ॥ ११ ॥

उत्तंसितेष्वपि तमालदलेषु लोल-
मालोक्य यं सखि कुतूहलमातनोषि ।
त्वां वीक्ष्य खिन्नहृदयां निहितं मुखेऽपि
दर्भाङ्कुरं त्यजत एष कुरङ्गशावः ॥ १२ ॥

उत्तंसितेषु इति ॥ सखि हे वयस्ये, उत्तंसितेषु कर्णावतंसीकृतेषु, तमालदलेषु अपि तमालपर्णेषु अपि, लोलं सतृष्ण हरितनवदर्भाङ्कुरशङ्कया तद्भक्षणे अत्यन्तासक्त इत्यर्थः, यं कुरङ्गशावं, आलोक्य अवेक्ष्य, कुतूहलं कौतुकं, आतनोषि प्राप्नोषि ; ( सः ) एषः अयं, कुरङ्गशावः हरिणशिशुः, त्वां भवतीं, खिन्नहृदयां विषण्णचित्तां, वीक्ष्य आलोक्य, मुखे स्ववदनकुहरे, निहितं न्यस्तं अपि भक्षणार्थं दत्तं अपि इत्यर्थः, दर्भाङ्कुरं दर्भस्य कुशस्य ( तृणविशेषस्य ) अङ्कुरं प्ररोहं, त्यजते उत्सृजति ॥ १२ ॥

कौतूहलात्करतले विनिवेश्य मुग्धं
वैदग्ध्यभङ्गिषु गिरां सखि यं व्यनैषीः ।
त्वां मौनमास्थितवतीमवलोक्य सोऽयं
क्रीडाशुकोऽपि नवबद्ध इवास्ति मूकः ॥ १३ ॥

कौतूहलात् इति ॥ सखि अयि वयस्ये, मुग्धं सुन्दरं, यं क्रीडाशुकं, त्वं, कौतूहलात् औत्सुक्यात्, करतले स्वपाणितले, विनिवेश्य निधाय, गिरां वाचां, वैदग्ध्यभङ्गिषु वैदग्ध्यस्य नैपुण्यस्य भङ्गिषु रीतिषु विषये, व्यनैषीः अशिक्षयः ; सः तादृशः, अयं एषः, क्रीडाशुकः अपि लीलाशुकः च, (सम्प्रति) त्वां भवतीं, मौनं मूकतां, आस्थितवतीं आपन्नां, अवलोक्य दृष्ट्वा, नवबद्धः इव नवं नूतनं यथा तथा [illegible] बद्धः पञ्जरे रुद्धः इव, मूकः निःशब्दः, [illegible] इत्यर्थः ॥ १३ ॥

उत्कूजितेन मधुरेण समाह्वयन्ती-
मग्रे गतां सहचरीमपि नानुयाति।
चञ्चूपुटे तव करेण समर्प्यमाणं
मुग्धे मृणालमभिकाङ्क्षति केलिहंसः ॥ १४ ॥

उत्कूजितेन इति ॥ मुग्धे हे सुन्दरि दमयन्ति, केलिहंसः तव क्रीडाहंसः, मधुरेण मनोज्ञेन, उत्कूजितेन ध्वनिना, समाह्वयन्तीं, आह्वानं कुर्वती अग्रे, पुर समक्षं इति यावत्, गतां स्थितां, सहचरीं अपि निजप्रियां हंसीं अपि, न अनुयाति न अनुसरति। (अपि तु), चञ्चूपुटे चञ्च्वाः त्रोट्याः 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः, पुटे अन्तरे मुखाग्रे इति यावत्, तव भवत्याः, करेण हस्तेन, समर्प्यमाणं दीयमानं, मृणालं बिसं, अभिवाञ्छति अभिलषति ॥ १४ ॥

नैसर्गिकीं कनकचम्पकसोदरीं ते
कान्तिं विलुम्पति कुतः सखि पाण्डुतेयम्।
तन्वि त्वमेषि पुनरेव कुतस्तनुत्वं
कुल्येव भानुकिरणैः कलिता निदाघे ॥ १५ ॥

नैसर्गिकीं इति ॥ सखि वयस्ये दमयन्ति, इयं एषा तव शरीरे परिदृश्यमाना इत्यर्थः, पाण्डुता पाण्डुवर्णत्वं पाण्डिमा इति यावत्, नैसर्गिकीं निसर्गसिद्धां स्वाभाविकीं अकृत्रिमां इत्यर्थः, कनकचम्पकसोदरीं कनकं सुवर्णं चम्पकं चम्पककुसुमं तयोः सोदरीं सदृशीं, ते तव, कान्तिं शरीरशोभां, कुतः कस्मात्, विलुम्पति अपहरति। तन्वि हे तनुगात्रि, निदाघे ग्रीष्मकाले, भानुकिरणैः सूर्यांशुभिः, कलिता स्पृष्टा शोषिता इत्यर्थः, कुल्या इव कृत्रिमा सरित् इव 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः, त्वं भवती, पुनः एव भूयः अपि, तनुत्वं कृशतां, कुतः कस्मात्, एषि गच्छसि प्राप्नोषि इत्यर्थः ॥' १५ ॥

इत्थं तया निगदिते शतशोऽपि सख्या
नाख्यायि किञ्चिदपि तत्र नरेन्द्रपुत्र्या।
अन्या तु भावमुपलब्धवती तदीयं
काचिज्जगादपदिदं वचनं वयस्या ॥ १६ ॥

**इत्थं इति** ॥ इत्थं एवं पूर्वोक्तप्रकारेण, इत्यर्थः, तया, सख्या आल्या, शतशः अनेकशः इत्यर्थः, निगदिते उक्ते सत्यपि, नरेन्द्रपुत्र्या भैम्या, तत्र तस्मिन् समये, किञ्चित् अपि किमपि उत्तरं, न आख्यायि न अभ्यधीयत । किन्तु, तदीयं तस्याः दमयन्त्याः अयं तं, भावं अभिप्रायं, उपलब्धवती अवगतवती, अन्या अपरा, काचित् काचन, वयस्या सखी, इदं वक्ष्यमाणं. वचनं वाक्यं, न्यवेदयत् अब्रवीत् ॥ १६ ॥

**रूपादिभिर्गुणगणैरनुरूपमस्या-**
**स्तातश्चिराय विमृशन्वरमात्मजायाः ।**
**आलेख्यकर्मकुशलैः फलकेषु कृत्स्ना-**
**नालेखयत्क्षितिभुजः प्रथितान्वयायान ॥ १७ ॥**

**रूपादिभिः इति** ॥ अस्याः एतस्याः दमयन्त्याः, तातः जनकः भीमराजः इत्यर्थः, रूपादिभिः सौन्दर्यादिभि, गुणगणैः सद्गुणौघैः, आत्मजायाः स्वदुहितुः दमयन्त्याः, अनुरूपं सदृशं. वरं पतिं इत्यर्थः, विमृशन् पर्यालोचयन् सन्. आलेख्यकर्मकुशलैः आलेख्यकर्मणि चित्रकर्मणि कुशलैः निपुणैः चित्रकारैः इत्यर्थः, प्रथितान्ववायान् प्रथितः प्रसिद्धः अन्ववायः वंशः येषां तान् प्रख्यातवंशसमुद्भूतान् 'वंशोऽन्ववायः सन्तानः' इत्यमरः, कृत्स्नान् समस्तान्, क्षितिं भूमिं भुञ्जन्ति इति तान् क्षितिभुजः महीपतीन्, फलकेषु चित्रफलकेषु, आलेखयत् चित्रार्पितान् कारयामास ॥ १७ ॥

**कौतूहलेन फलकेषु मयाहृतेषु**
**क्षोणीभृतो विलिखितान्निपुणं निरूप्य ।**
**आसीदियं त्रिजगतामभिनन्दनीये**
**कुत्रापि यूनि विनिवेशितचित्तवृत्तिः ॥ १८ ॥**

**कौतूहलेन इति** ॥ कौतूहलेन कौतुकेन, मया, फलकेषु चित्रफलकेषु. आहृतेषु दमयन्तीसमीपं आनीतेषु सत्सु, इयं एषा दमयन्ती, विलिखितान् चित्रफलकेषु विन्यस्तान्, क्षोणीभृतः महीपतीन्, निपुणं सूक्ष्मदृष्ट्या सम्यक् इति यावत्, निरूप्य निरीक्ष्य, त्रिजगतां भुवनत्रयस्यापि, अभिनन्दनीये प्रशंसनीये, कुत्रापि कस्मिंश्चित्, यूनि तरुणे युवपुरुषे, विनिवेशितचित्तवृत्तिः विनिवेशिता

निक्षिप्ता चित्तवृत्तिः मनःप्रवृत्तिः अभिलाषः इत्यर्थः यस्याः सा तादृशी, आसीत् अभवत् ॥ १८ ॥

**खेदोज्झितामपि तनूमवसादयन्ती**
**विश्वं निरावरणमेव तिरोदधाना ॥**
**निद्रां विनापि नयने विनिमीलयन्ती**
**चिन्ता पदं कृतवती हृदये ततोऽस्याः ॥ १९ ॥**

**खेदोज्झितां इति** ॥ ततः तद्युवदर्शनसमनन्तरं एव, खेदोज्झितां अपि खेदेन श्रमेण उज्झितां रहितां अपि, तनूं तच्छरीरं, अवसादयन्ती ग्लपयन्ती ग्लानिं आपादयन्ती इति यावत, (तथा), विश्वं भुवनं, निरावरणं एव निराच्छादनं यथा तथा आवरणं विनैव इत्यर्थः, तिरोदधाना तिरोहयन्ती आच्छादयन्ती, (तथा), निद्रां विनापि स्वापं विनैव, नयने चक्षुषी, विनिमीलयन्ती मुकुलयन्ती, चिन्ता काचित् भावना, अस्याः दमयन्त्याः, हृदये मनसि, पदं कृतवती प्रादुरासीत् इत्यर्थः ॥ १९ ॥

**एणीदृशः प्रबलतापभयादिवास्याः**
**श्वासानिलाः प्रतिमुहुः प्रसरन्ति दूरम् ।**
**बाष्पाम्बुवीचिषु निमज्जनकातरेव**
**निद्रा दृशोर्न सविधेऽपि पदं विधत्ते ॥ २० ॥**

**एणीदृशः इति** ॥ अस्याः एतस्याः, एणीदृशः हरिणलोचनायाः दमयन्त्याः, श्वासानिलाः निःश्वासमरुतः, प्रबलतापभयात् इव अत्यन्तसन्तापभीत्या हेतुना इव, प्रतिमुहुः मुहुर्मुहुः, दूरं दीर्घं यथा तथा, प्रसरन्ति निस्सरन्ति । निद्रा स्वापः च, बाष्पाम्बुवीचिषु अश्रुजलपरम्परासु, निमज्जनकातरा इव आप्लवनभीता इव, दृशोः नेत्रयोः, सविधे अपि समीपे अपि, पदं न विधत्ते न आगच्छति इत्यर्थः ॥ २० ॥

**उज्जृम्भते भृशमुशीरविलेपनेन**
**धत्ते रुषं कमलिनीदलमारुतेन ।**
**अन्तःस्थमेव सुभगं सततं स्मरन्त्याः**
**संताप एष सुतनोर्बत दुर्निवारः ॥ २१ ॥**

उज्जृंभते इति ॥ अन्तःस्थं निजहृदयान्तर्वर्तिनं, सुभगं एव महानुभावं एव (सुन्दरपुरुष एव वा), सततं अनवरतं, स्मरन्त्याः चिन्तयन्त्याः, कुर्वन्त्याः अस्य- यन्त्याः, एषः अथ,सन्तापः शरीरदाहः, उशीरविलेपनेन शैत्योपचारार्थं स्तनप्रदेशे न्यस्तेन नलदलेपनेन, भृशं अतितरां, उज्जृंभते प्रवर्द्धते ; कमलिनीदलमारुतैन नलिनीदलतालवृन्तसमुद्भवेन पवनेन, रुषं प्रकोप, धत्ते भजते सन्तापः पूर्वाधिकः भवति इत्यर्थः । (तस्मात् एषः सन्तापः ), दुर्निवारः दुर्निरोधः अप्रतीकार्यः इति यावत् ( अस्ति ) ॥ २१ ॥

ज्यौत्स्नीषु चन्द्रमवलोकितुमक्षमेयं
लोलेक्षणा नयनयुग्ममवाञ्चयन्ती ।
वीक्ष्याननं स्तनतटे प्रतिबिम्बितं स्वं
तच्छङ्कया सपदि वेपथुमातनोति ॥ २२ ॥

ज्यौत्स्नीषु इति ॥ लोलेक्षणा चपलनयना, इय एषा दमयन्ती, ज्यौत्स्नीषु चन्द्रिकायुक्तासु रात्रिषु 'रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता' इत्यमरः, चन्द्रं इन्दुं, अवलोकितुं वीक्षितुं, अक्षमा अशक्ता, ( अतः एव ), नयनयुग्मं नेत्रयुगलं,अवाञ्चयन्ती अवाक् कुर्वती मुख अवनमयन्ती सती,स्तनतटे अतिविमले निजकुचप्रदेशे, प्रतिबिम्बितं प्रतिफलितं, स्वं स्वकीयं, आननं मुखं, वीक्ष्य आलोक्य, तच्छङ्कया तस्य चन्द्रस्य शङ्कया सन्देहेन, सपदि तूर्णं, वेपथु कम्पं, आतनोति करोति भयत्रस्ता भवति इत्यर्थः ॥ २२ ॥

एषा निसर्गसुकुमारतनुर्विशेषात्
क्षामा स्मरेण विषहेत कथं भरं मे ।
इत्थं विचिन्त्य किमु निर्गलितं कराभ्यां
क्षोणीतले लुठति कङ्कणयुग्ममस्याः ॥ २३ ॥

एषा इति ॥ निसर्गसुकुमारतनुः स्वभावपेशलाङ्गी, विशेषात् विशेषतः, स्मरेण मदनेन मदनावस्थया इत्यर्थः, क्षामा कृशा क्षामाङ्गी इत्यर्थः, एषा इयं दमयन्ती. मे मम कङ्कणयुगलस्य इत्यर्थः, भरं भारं, कथं केन प्रकारेण, विषहेत सोढुं शक्नुयात् ।' इत्थं एवं, विचिन्त्य किमु संभाव्य इव इत्यर्थः, अस्याः

एतस्याः दमयन्त्याः, कङ्कणयुग्मं वलययुगलं, करसभ्यां तत्पाणिद्वन्द्वात्, निर्गलितं विस्रस्तं सत्, क्षोणीतले भूतले, लुठति परिवर्तते ॥ २३ ॥

नीरन्ध्रमावृणुत कैरविणीं समेताः
क्षौमाञ्चलैः सरभसं समुपेत्य सख्यः ।
एषापि माहमिव दाहवशंवदास्तु
संप्रत्यपि प्रणयिनी हतचन्द्रिकासु ॥ २४ ॥

नीरन्ध्रं इति ॥ 'सख्यः हे प्रियवयस्याः, (यूयं), समेताः सङ्गताः सत्यः, सरभसं सत्वरं, समुपेत्य समागत्य, क्षौमाञ्चलैः दुकूलप्रान्तैः, कैरविणीं कुमुदिनीं कुमुदाकर इति यावत्, नीरन्ध्रं निरवकाशं यथा तथा आविरलं इति यावत्, आवृणुत आच्छादयत । (यतः), हतचन्द्रिकासु हतासु अतितुच्छासु चन्द्रिकासु कौमुदीषु विषये, संप्रत्यपि इदानीमपि अद्यापि इति यावत्, प्रणयिनी प्रणयवती स्नेहवती इति यावत्, एषा अपि इयं कैरविणी अपि, अहं इव अहं यथा, दाहवशंवदा सन्तापाभिभूता, मा अस्तु माभूत् ॥ २४ ॥

पानाय चन्द्रमहसामसकृद्विलोल-
श्चञ्चूपुटस्तव चकोर पुरेव मा भूत् ।
एतेषु संप्रति सुधामपसार्य सद्यः
प्राणापहारि गरलं हि विधिर्व्यधत्त ॥ २५ ॥

पानाय इति ॥ चकोर हे जीवञ्जीवपक्षिन् तव ते, चञ्चूपुटः त्रोटीपुट-मुखाग्रं इति यावत्, पुरा इव पूर्वं यथा, (संप्रत्यपि), चन्द्रमहसां इन्दुकिरणानां, पानाय आस्वादाय, असकृत् शश्वत्, विलोलः चपलः सतृष्णः इति यावत्, माभूत् मा अस्तु । हि यस्मात् कारणात्, विधिः विधाता, संप्रति इदानीं, एतेषु एषु चन्द्रमहस्सु, सुधां (इतः पूर्वं स्थित) अमृतं, अपसार्य अपनीय, सद्यः सपदि, प्राणापहारि प्राणापहरणशीलं मरणोत्पादकं इत्यर्थः, गरलं विषं 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः, व्यधत्त विदधते स्म निहितवान् इत्यर्थः ॥ २५ ॥

मुञ्चन्ति मुर्मुरकणान्मरुतस्त एव
तान्येव कोकिलरुतानि तुदन्ति कर्णौ ।

सख्यः किमेतदिति निःसहमालपन्ती
निद्रां न विन्दति नरेन्द्रसुता निशासु ॥ २६ ॥

**मुञ्चन्ति इति** ॥ ते एव पूर्वं ये मदङ्गेषु शीतलाः अभवन् तादृशाः एव, मरुतः मन्दानिलाः इत्यर्थः, (संप्रति), मुर्मुरकणान् तुषाग्निशकलानि, मुञ्चन्ति विसृजन्ति विकिरन्ति इति यावत्। तानि एव यानि इतः पूर्वं कर्णमधुराणि अभवन् तादृशानि एव, कोकिलरुतानि पिककूजितानि, (अधुना), कर्णौ मम श्रोत्रयुग्म, तुदन्ति पीडयन्ति। सख्यः हे आल्यः, एतत् इदं, किं कुतः?' इति एवं, निस्सहं असह्यवेदनं यथा तथा इत्यर्थः, आलपन्ती वदन्ती सती, नरेन्द्र-सुता भीमराजतनया, निशासु रजनीषु, निद्रां स्वापं, न विन्दति न लभते ॥२६॥

स्मेरेषु चन्द्रकिरणैर्वलभीगृहेषु
धौतेषु चन्दनरसैर्मणिकुट्टिमेषु।
आरामसीमसु घनद्रुमशीतलासु
कुत्रापि निर्वृतिरभून्न विदर्भजायाः ॥ २७ ॥

**स्मेरेषु इति** ॥ चन्द्रकिरणैः इन्दुमयूखैः, स्मेरेषु उज्ज्वलेषु इत्यर्थः, वल-भीगृहेषु वलभ्यः गोपानस्यः 'गोपानसी तु वलभी च्छादने वक्रदारुणि' इत्यमरः, तत्समीपस्थानि गृहाणि तेषु प्रासादशिखरस्थमन्दिरेषु इत्यर्थः चन्द्रशालासु इति यावत्,(तथा); चन्दनरसैः मलयजद्रवैः चन्दनवारिभिः इत्यर्थः, धौतेषु क्षालितेषु, मणिकुट्टिमेषु रत्ननिबद्धभूमिषु, 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः, (तथा), घनद्रुमशीतलासु घनाः निबिडाः ये द्रुमाः वृक्षाः तैः शीतलाः शिशिराः तासु तादृशीषु, आरामसीमसु आरामाः उपवनानि 'आरामः स्यादुपवन' इत्यमरः, तेषां सीमानः पर्यन्तप्रदेशाः तासु 'सीमसीमे स्त्रियामुभे' इत्यमरः, कुत्रापि (एतादृशस्थलेषु मध्ये) क्वचिदपि, विदर्भजायाः विदर्भराजसुतायाः दमयन्त्याः, निर्वृतिः सुख तापशान्तिः इत्यर्थः, न अभूत् न आसीत् ॥' ॥ २७ ॥

इत्थं रहस्यमभिधाय शनैर्वयस्या
तत्कालयोग्यमुपचारविधिं विधित्सुः।
आहृत्य केलिसरसः सरसैर्म्रदिष्ठैः
पाथोजिनीकिसलयैः शयनं व्यधत्त ॥ २८ ॥

**इत्थं इति** ॥ इत्थं एवं, रहस्यं गुह्य गूढं तत्वं इति यावत्, शनैः मन्दं मन्दं, अभिधाय उक्त्वा, वयस्या तत्सखी, तत्कालयोग्यं तत्समयोचितं, उपचारविधिं शैत्योपचाररूपं कर्म, विधातुं इच्छुः विधित्सुः चिकीर्षुः सती. केलिसरसः क्रीडाकासारात्, ( कमलकिसलयानि ), आहृत्य आनीय, सरसैः सार्द्रैः, म्रदिष्ठैः अत्यन्तसुकुमारैः, पाथोजिनीकिसलयैः नलिनीपल्लवैः, शयनं शय्यां संस्तरं इति यावत्, व्यधत्त निर्ममे ॥ २८ ॥

**तस्मिन्निसर्गशिशिरेऽपि मृगीदृशोऽस्याः**
**पाथोजिनीकिसलयास्तरणे लुठन्त्याः ।**
**आसीन्न निर्वृतिलवः शफराङ्गनायाः**
**कुल्याम्भसीव रविदीधितिदीपितायाः ॥ २९ ॥**

**तस्मिन् इति** ॥ निसर्गशिशिरे स्वभावशीतले, तस्मिन् तादृशे, पाथोजिनीकिसलयास्तरणे सरोजपल्लवनिर्मिते शयने, लुठन्त्याः अपि परिवर्तनं कुर्वत्याः अपि, कुल्यांभसि कुल्यायाः क्षुद्रसरितः अंभसि जले, रविदीधितिदीपितायाः सूर्यकिरणसन्तापितायाः, शफराङ्गनायाः इव शफरः मत्स्यविशेषः तस्य अङ्गना स्त्री तस्याः शफर्याः इव ( प्रोष्ठी तु शफरी द्वयोः इत्यमरः), निर्वृतिलवः सुखलेशः अपि, न आसीत् न अभूत् ॥ २९ ॥

**सान्द्रा मृणाललतिका स्मरविक्लवाया-**
**स्तस्याः सखीभिरधिकण्ठतटं न्यधायि ।**
**श्यामीकृता सपदि तापभरेण सापि**
**स्निग्धेन्द्रनीलमणिहारतुलामयासीत् ॥ ३० ॥**

**सान्द्रा इति** ॥ स्मरविक्लवायाः स्मरेण मदनेन विक्लवायाः विह्वलायाः मदनपीडितायाः इति यावत्, तस्याः दमयन्त्याः, अधिकण्ठतट कण्ठप्रदेशे, सान्द्रा निबिडा अतिघना इति यावत्, मृणाललतिका बिसवल्ली, सखीभिः वयस्याभिः, न्यधायि संतापशमनार्थं निक्षिप्ता । सा मृणाललतिका अपि, तापभरेण दमयन्तीशरीरसन्तापाधिक्येन, सपदि सद्यः एव, श्यामीकृता कृष्णवर्णीकृता सती, स्निग्धः मनोज्ञः यः इन्द्रनीलमणिहारः महानीलमणिमाला तस्य तुलां सादृश्यं, अयासीत् प्राप ॥ ३० ॥

इत्थं सखीविरचितैः शिशिरोपचारै-
दुर्वारतापरभसामवलोक्य बालाम् ।
संवीजयन्किमपि पक्षपुटाञ्चलेन
तामित्यवादिषमहं मृदुना स्वरेण ॥ ३१ ॥

इत्थं इति ॥ इत्थं एव, सखीविरचितैः सखीभिः वयस्याभिः विरचितैः विहितैः, शिशिरोपचारैः शैत्योपचरणैः अपि, दुर्वारतापरभसां दुर्निरोधसन्तापोद्रेकां, बालां युवतीं दमयन्तीं, अवलोक्य समीक्ष्य, अहं, पक्षपुटाञ्चलेन मम पक्षाग्रेण, किमपि किञ्चित्, संवीजयन् वीजनं कुर्वन्, मृदुना मन्देन, स्वरेण ध्वनिना, (उपलक्षितः), तां दमयन्तीं, इति वक्ष्यमाणप्रकारेण, अवादिषं अवोचम् ॥ ६१ ॥

एकः स एव तरुणः स्पृहणीयजन्मा
तस्यैव पुण्यनिवहः परिणाहशाली ।
चेतोभुवस्त्रिजगतीजयवैजयन्ति
यः प्रेम पल्लवयितुं निपुणस्तवासीत् ॥ ३२ ॥

एकः इति ॥ चेतोभुवः मन्मथस्य, त्रिजगतीजयवैजयन्ति त्रिभुवन विजयपताकायमाने हे दमयन्ति, यः तरुणः, तव भवत्याः, प्रेम अनुरागं, पल्लवयितुं अङ्कुरयितुं उत्पादयितुं वर्धयितु वा इत्यर्थः, निपुणः समर्थः, आसीत् अभवत्; सः तादृशः, तरुणः युवा, एकः एव एकः केवल, स्पृहणीयजन्मा स्पृहणीय अभिलषणीयं जन्म उत्पत्तिः यस्य सः तादृशः, (अस्ति)। तस्य एव, पुण्यनिवहः सुकृतनिकरः, परिणाहशाली वैपुल्ययुक्तः, (वर्तते) ॥ ३२ ॥

तन्वन्ति ये त्वयि तनूदरि भावबन्धं
धन्यास्त एव भुवनत्रितये युवानः ।
किं नाम तेऽपि मधुपाः स्मितलेशभाजं
सायन्तनीमनुसरन्ति न मल्लिकां ये ॥ ३३ ॥

तन्वन्ति इति ॥ तनु अल्पं उदरं मध्यं इत्यर्थः यस्याः तत्संबुद्धिः तनूदरि हे कृशोदरि, ये, युवानः तरुणाः, त्वयि तव उपरि, भावबन्धं अनुरागं, तन्वन्ति कुर्वन्ति; ते एव, भुवनत्रितये त्रिभुवने अपि, धन्याः भाग्यशालिनः,

(भवन्ति)। ये मधुपाः, स्मितलेशभाजं ईषद्विकसितां इत्यर्थः, सायन्तनीं सायङ्काले भवां, मल्लिकां मालती, न अनुसरन्ति न उपगच्छन्ति ; ते अपि तादृशाः अपि भ्रमराः, मधुपाः, किं नाम किमु ॥ ३३ ॥

**त्वं श्लाघ्यसे शतमखप्रमुखैरमर्त्यैः**
**कीदृग्विधेषु मनुजेषु मृगायताक्षि ।**
**अभ्यर्थितस्तु तव सुन्दरि दुर्लभो यः**
**सोऽयं न कस्य हृदि विस्मयमातनोति ॥ ३४ ॥**

**त्वं इति** ॥ मृगस्य हरिणस्य इव आयते दीर्घे आक्षिणी यस्याः सा तत्संबोधन मृगायताक्षि हे हरिणदीर्घलोचने, त्व भवती, शतमखप्रमुखैः शतमखः इन्द्रः प्रमुखः आदिः येषां तैः इन्द्रादिभिः इत्यर्थः, अमर्त्यैः देवैः 'अमर्त्या अमृतान्धसः' इत्यमरः, श्लाघ्यसे अभिनन्द्यसे । हे सुन्दरि सौन्दर्यसंपन्ने, कीदृग्विधेषु कीदृक्प्रकारेषु तुच्छेषु इत्यर्थः, मनुजेषु मनुष्येषु (मध्ये), यः, अभ्यर्थितः (त्वया) प्रार्थितः सन्, तव ते, दुर्लभः दुरापः, (भवेत्) ; सः तादृशः, अयं एषः तु, कस्य, हृदि मनसि, विस्मयं आश्चर्यं, न आतनोति न उत्पादयति सर्वस्यापि हृदये विस्मयं आतनोति एव इत्यर्थः ॥ ३२ ॥

**मध्येविलासविपिनं मणिमन्दिरेषु**
**मन्दारदामभिरलङ्कृतकुट्टिमेषु ।**
**शच्यापि सार्धममराधिपतिर्विहर्तुं**
**मन्दादरो भवति सुन्दरि चिन्तया ते ॥ ३५ ॥**

**मध्य इति** ॥ हे सुन्दरि, ते तव, चिन्तया स्मरणेन, अमराधिपतिः देवेन्द्रः, विलासविपिनस्य मध्ये मध्येविलासविपिनं (अव्ययीभावसमासः) क्रीडाराममध्ये इत्यर्थः, मन्दारदामभिः तदाख्यकल्पद्रुमकुसुममालाभिः, अलंकृतकुट्टिमेषु अलङ्कृताः भूषिताः कुट्टिमाः निबद्धभुवः येषां तेषु तादृशेषु, मणिमन्दिरेषु रत्नखचितगृहेषु, शच्या अपि साकं इन्द्राण्या अपि सह, विहर्तुं क्रीडितुं, मन्दादरः विगताभिलाषः, भवति वर्तते ॥ ३९ ॥

**दाक्षिण्यतः सुरमहीरुहमञ्जरीभि-**
**रापिञ्जराभिरवतंसयितुं प्रियायाः ।**

**अर्धप्रसारितकरोऽप्यमराधिनाथ-**
**स्त्वच्चिन्तया सुमुखि मन्थरतामुपैति ॥ ३६ ॥**

**दाक्षिण्यतः इति** ॥ सुमुखि हे सुवदने, अमराधिनाथः इन्द्रः, दाक्षिण्यतः सौजन्यात् हेतोः उपचारात् हेतोः इत्यर्थः, आपिञ्जराभिः आरक्ताभिः, सुरमहीरुहमञ्जरीभिः कल्पतरुकुसुमस्तबकैः, प्रियायाः दयितायाः इन्द्राण्याः, अवतंसयितुं अवतंसं कर्तुं, अर्धप्रसारितकरः अपि कियद्दूरप्रोत्क्षिप्तहस्तः सन् अपि, त्वच्चिन्तया तव भवत्याः चिन्तया स्मरणेन, मन्थरतां स्तब्धतां, उपैति प्राप्नोति ॥ ३६ ॥

**मध्येऽपि दुग्धजलधेः कलिताधिवासः**
**संवाह्यमानचरणोऽपि तरङ्गिणीभिः ।**
**अन्तर्विचिन्त्य भवतीमवनीन्द्रपुत्रि**
**तापोत्तरं वपुरपामधिपो बिभर्ति ॥ ३७ ॥**

**मध्ये इति** ॥ अवनीन्द्रपुत्रि हे भैमि, दुग्धजलधेः क्षीरसागरस्य, मध्ये अन्तःप्रदेशे, कलिताधिवासः कृतवसतिः अपि, (तथा), तरङ्गिणीभिः (निजपत्नीभिः) नदीभिः, संवाह्यमानचरणः मृद्यमानपादः सन् अपि, अपां अधिपः अप्पतिः वरुणः च इत्यर्थः, भवतीं त्वां, अन्तः हृदयाभ्यन्तरे, विचिन्त्य स्मृत्वा, तापोत्तरं तापप्रधान सन्तापबहुलं इत्यर्थः, वपुः शरीरं बिभर्ति वहति ॥ ३७ ॥

**तन्वि त्वदर्थमनिशं परिपीड्यमानः**
**पञ्चेषुणा धनपतिर्विनिमीलिताक्षः ।**
**सख्युः सकाशमुपसर्पति चन्द्रमौले-**
**स्तन्मौलिचन्द्रमहसः परिशङ्कमानः ॥ ३८ ॥**

**तन्वि इति** ॥ तन्वि हे कृशाङ्गि, त्वदर्थं त्वन्निमित्तं त्वां उद्दिश्य इत्यर्थः, पञ्चेषुणा मन्मथेन, अनिशं सन्ततं, परिपीड्यमानः परिक्लिश्यमानः, धनपतिः कुबेरः, तन्मौलिचन्द्रमहसः तस्य चन्द्रमौलेः मौलौ चूडायां स्थितस्य चन्द्रस्य महसः किरणात्, परिशङ्कमानः सन्त्रस्यन् सन्, (अतः एव), विनिमीलिताक्षः मुकुलितनयनः सन्, सख्युः स्वमित्रस्य, चन्द्रः मौलौ यस्य तस्य चन्द्रमौलेः चन्द्रचूडस्य शिवस्य इति यावत्, सकाशं समीपं, उपसर्पति उपगच्छति ॥ ३८ ॥

त्वां भावयन्कनककेतकगर्भगौरि
मन्दादरः प्रणयिनीष्वपि पार्श्वगासु ।
पञ्चाशुगेन सुहृदापि शिलीमुखानां
लक्षीकृतः स्वमपि निन्दति रोचिरिन्दुः ॥ ३९ ॥

**त्वां इति** ॥ कनककेतकगर्भगौरि कनककेतकस्य सुवर्णकेतकीकुसुमस्य गर्भः अन्तर्भागः तद्वत् गौरी पीतवर्णा तत्संबोधनं, इन्दुः चन्द्रः, त्वां भवतीं, सम्भावयन् चिन्तयन्, पार्श्वगासु अपि समीपवर्तिनीषु, अपि प्रणयिनीषु दयितासु अश्विन्यादिषु तारासु इत्यर्थः, मन्दादरः परिक्षीणाभिलाषः सन्, सुहृदा अपि निजप्रियवयस्येन अपि, पञ्च आशुगाः बाणाः यस्य तेन पञ्चाशुगेन पञ्चबाणेन मन्मथेन इति यावत्, शिलीमुखानां स्वशराणां, लक्षीकृतः शरव्यीकृतः सन्, स्वं अपि आत्मीयं अपि, रोचिः किरणं, निन्दति ( मदनबाधावर्धकत्वात् ) अधिक्षिपति ॥ ३९ ॥

न्यस्तेक्षणस्तव तनौ स्तनबन्धुराङ्गि
रागान्ध्यमेत्य भगवानरविन्दबन्धुः ।
भ्राम्यन्मुहुः कनकभूधरमेखलाया-
माम्रेडितानि वितनोति गतागतेषु ॥ ४० ॥

**न्यस्तेक्षणः इति** ॥ स्तनाभ्यां बन्धुरं उन्नतानतं अङ्गं यस्याः तत्संबोधनं स्तनबन्धुराङ्गि 'बन्धुर तून्नतानतं' इत्यमरः, भगवान् माहात्म्यसम्पन्नः, अरविन्दबन्धुः सूर्यः च, तव ते, तनौ शरीरे, न्यस्तेक्षणः निक्षिप्तनयनः सन्, रागान्ध्यं रागेण अनुरागेण आन्ध्यं अन्धत्वं मोहं इत्यर्थः, एत्य प्राप्य, कनकभूधरमेखलायां कनकभूधरः मेरुपर्वतः तस्य मेखलायां नितम्बे 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति विश्वः, मुहुः पुनः पुनः, भ्राम्यन् परिभ्रमन् सन्, गतागतेषु गमनागमनेषु, आम्रेडितानि आवर्तनानि पौनःपुन्यं इति यावत् 'आम्रेडितं द्विस्त्रिरुक्तं' इत्यमरः, वितनोति करोति ॥ ४० ॥

सन्ध्यार्धतामुपगतां गिरिशस्य वीक्ष्य
क्षोणीधरेन्द्रतनयामवनीन्द्रपुत्रि ।

स्पर्धावती त्वमसि चेद्वद निर्विशङ्कं
त्वां दक्षिणार्धमहमस्य करोमि सद्यः ॥ ४१ ॥

सव्यार्धतां इति ॥ अवनीन्द्रपुत्रि हे भूपकुमारि, त्वं भवती, गिरिः अस्य अस्ति इति गिरिशः तस्य गिरिशस्य शिवस्य 'गिरीशो गिरिशो मृडः' इत्यमरः, सव्यार्धतां वामार्धत्वं शिवाङ्गस्य वामार्धत्व इत्यर्थः, उपगतां प्रपन्नां, क्षोणीधरेन्द्रतनयां क्षोणीधराणां पर्वतानां इन्द्रः अधिपतिः क्षोणीधरेन्द्रः भूधरश्रेष्ठः हिमवान् इति यावत् तस्य तनया सुता तां पार्वतीं, वीक्ष्य आलोक्य, स्पर्धावती संघर्षवती, असि चेत् भवसि यदि, (तर्हि), वद कथय। अहं निर्विशङ्कं निस्संशयं यथा तथा, त्वां भवतीं, सद्यः सपदि, अस्य गिरिशस्य, दक्षिणार्धं सव्येतरभागार्धरूपां इत्यर्थः, करोमि विधास्यामि इत्यर्थः ॥ ४१ ॥

किं विस्तरेण वचसामपरेण भूय-
स्त्वं चेत्कुतूहलवती तरलायताक्षि ।
क्षीराम्बुराशितनयामपरामिव त्वां
नारायणस्य हृदये विनिवेशयामि ॥ ४२ ॥

किमिति ॥ भूयः पुनरपि, अपरेण अन्येन, वचसां उक्तीनां, विस्तरेण प्रपञ्चेन, किं प्रयोजनं किं बहुना उक्तेन इत्यर्थः। हे तरलायताक्षि चञ्चलदीर्घनेत्रे. त्वं, कुतूहलवती चेत् कुतुकिनी यदि स्पृहावती भवसि यदि इत्यर्थः, (तर्हि), त्वां भवतीं, अपरां अन्यां, क्षीराम्बुराशितनयां इव क्षीरसागरकन्यकां इव लक्ष्मीदेवी इव इति यावत् 'भार्गवी लोकजननी क्षीरसागरकन्यका' इत्यमरः, नारायणस्य श्रीमहाविष्णोः, हृदये वक्षसि, विनिवेशयामि निक्षिपामि ॥ ४२ ॥

एते मया मखभुजः कथिताः पुरस्ते
ये दुर्लभास्त्रिषु जगत्सु विलासिनीभिः ।
अग्रेसरस्त्वमुपनेष्यति भाग्यभाजां
त्वत्पाणिपीडनविधिः कतमं तदेषु ॥ ४३ ॥

एते इति ॥ ये मखभुजः, त्रिषु जगत्सु त्रिभुवने भुवनत्रये अपि इति यावत्, विलासिनीभिः कामिनीभिः स्त्रीभिः इति यावत्, दुर्लभाः कष्टेन प्राप्याः,

(सन्ति); एते एतादृशाः, अग्निभुक्प्रभृतयः देवाः 'बर्हिर्मुखाः क्रतुभुजः' इत्यमरः, ते भवत्याः, पुरः अग्रे समक्षं इति यावत्, मया, कथिताः वर्णिताः, (आसन्)। तत् तस्मात्, एषु एतेषु देवेषु मध्ये, कतम क देव इत्यर्थः, त्वत्पाणिपीडनविधिः त्वत्पाणिग्रहणविधिः विवाहविधिः इति यावत्, भाग्यभाजां भाग्यशालिनां सुकृतिनां इति यावत्, अग्रेसरत्वं पुरस्सरतां अग्रणीत्व इति यावत्, उपनेष्यति प्रापयिष्यति ॥ ४३ ॥

कर्णाभिराममिह मां बहु भाषमाणं
त्वं केलिकीरमिव सुन्दरि मावमंस्थाः ।
वैमानिकोऽस्मि कमलप्रभवस्य तन्मे
लोकेषु सप्तसु न दुष्करमस्ति किञ्चित् ॥ ४४ ॥

**कर्णाभिराममिति** ॥ हे सुन्दरि सौन्दर्यसपन्ने दमयन्ति, त्व भवती, इह इदानी, कर्णाभिरामं श्रोत्रमनोहर यथा तथा, बहु अनेकवाक्यानि इत्यर्थ (बहुप्रकारेण वा), भाषमाण वदन्त, मां, केलिकीर इव क्रीडाशुकवत्, मा अवमंस्थाः मा अवधीरयस्व । (यतः), (अहं), कमलप्रभवस्य पद्मसंभवस्य ब्रह्मणः इति यावत्, वैमानिकः विमानवाहकः, अस्मि भवामि । तत् तस्मात्, सप्तसु लोकेषु सप्तलोक्यां अपि, मे मम, दुष्कर दुस्साध असाध्य इत्यर्थ, किञ्चित् किमपि, न अस्ति न वर्तते' ॥ ४४ ॥

इत्थं मया निगदिता बहुधा मृगाक्षी
सा निश्चयं कृतवती वचने मदीये ।
यत्रावलोकितवती तव देहलक्ष्मीं
भूयोऽपि तत्फलकमेव हृदि न्यधत्त ॥ ४५ ॥

**इत्थमिति** ॥ इत्थ एवं पूर्वोक्तप्रकारेण, मया, बहुधा अनेकधा, निगदिता उक्ता, सा, मृगाक्षी हरिणलोचना दमयन्ती इत्यर्थः, मदीये मामके मया अभिहिते इत्यर्थः, वचने वचसि, निश्चय निर्णय विश्वासं इति यावत्, कृतवती चकार । यत्र यस्मिन् चित्रफलके, तव भवतः, देहलक्ष्मीं शरीरसौन्दर्यं, अवलोकितवती निरीक्षितवती; तत् तादृशं, फलकं एव चित्रफलकं एव, भूयः अपि पुनः अपि, हृदि हृदयप्रदेशे, न्यधत्त न्यवेशयत् ॥ ४५ ॥

तस्मिन्सखे लिखितया तव देहलक्ष्म्या
त्वय्येकतानहृदयामवलोक्य बालाम् ।
आत्मानमाकलयता सफलप्रयासं
भैमी प्रमोदतरलेन मयाभ्यधायि ॥ ४६ ॥

**तस्मिन् इति** ॥ सखे हे मित्र नल, तस्मिन् चित्रफलके, लिखितया चित्रितया, तव भवतः, देहलक्ष्म्या गात्रशोभया हेतुना, बालां नवयौवनां दमयन्तीं, त्वयि भवद्विषये, एकतानहृदयां एकाग्रमानसां, अवलोक्य आलक्ष्य, आत्मान मां इत्यर्थः, सफलप्रयास अवन्ध्यप्रयत्न, आकलयता मन्वानेन, (अतः एव), प्रमोदतरलेन हर्षपरवशेन, मया, भैमी भीमराजतनया दमयन्ती, (एव), अभ्यधायि अभ्यभाष्यत अभिहिता इति यावत ॥ ४६ ॥

त्वं माधवी मधुरसौ जगदेकवीर-
स्त्वं कौमुदी कुमुदबन्धुरयं नरेन्द्रः ।
आस्तां निरस्तसदृशान्तरयोश्चिराय
संबन्ध एष युवयोरभिनन्दनीयः ॥ ४७ ॥

**त्वमिति** ॥ 'हे दमयन्ति, त्व भवती, माधवी वासन्ती लता तद्वत् असि इत्यर्थः । जगदेकवीरः जगति भुवने एकः अद्वितीयः वीरः शूरः, असौ अय नलः, मधुः वसन्तः वसन्तवत् वर्तते इत्यर्थः । (कि च) त्वं भवती, कौमुदी चन्द्रिका कौमुदीतुल्या इत्यर्थः । अय असौ नरेन्द्रः नलमहाराजः, कुमुदबन्धुः कुमुदबान्धवः चन्द्रः इति यावत् 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुद-बान्धवः ।' इत्यमरः, इन्दुतुल्यः इत्यर्थः । (तस्मात्), निरस्तसदृशान्तरयोः उपमानान्तररहितयोः निरुपमयोः इत्यर्थः, त्व च सः च युवां तयोः युवयोः दमयन्तीनलयोः इत्यर्थः, चिराय चिरकालपर्यन्त, अभिनन्दनीयः श्लाघनीयः, एषः अयं, सम्बन्धः विवाहरूपसंबन्धः, आस्तां भवतु' ॥ ४७ ॥

आश्वास्य तामिति वचोभिरहं दिदृक्षु-
स्त्वां यावदम्बरपथं न समुत्पतामि ।

तावत्तया स्तनतटादपकृष्य हारः
स्वेनैव पाणिकमलेन समर्पितोऽयम् ॥ ४८ ॥

**आश्वास्येति** ॥ इति एवंविधैः इत्यर्थः, वचोभिः वचनैः, तां दमयन्तीं, आश्वास्य सान्त्वयित्वा स्वस्थचित्तां कृत्वा इत्यर्थः, अहं, त्वां, भवन्तं, दिदृक्षुः द्रष्टुं इच्छुः सन् , यावत् यदवधि, अम्बरपथं आकाशमार्गं, न समुत्पतामि न उद्गच्छामि; तावत् तदवधि, तया दमयन्त्या, स्तनतटात् स्वकुचतटात् , अपकृष्य अपनीय उद्धृत्य इति यावत्, अयं एषः, हारः मौक्तिकमाला, स्वेन स्वकीयेन, पाणिकमलेन एव करपद्मेन एव, (मह्यं), समर्पितः दत्तः (अभूत्) ॥

द्राघीयसी हिमरुचेरपि निर्मलेयं
वक्षोजकुङ्कुमरजोभिरुदीर्णरागा ।
तस्याः सखे हृदयवृत्तिरिव द्वितीया
मुक्तालता हृदि तवास्पदमातनोतु ॥ ४९ ॥

**द्राघीयसी इति** ॥ सखे भोः वयस्य, द्राघीयसी अत्यन्तदीर्घा, हिमरुचेः अपि चन्द्रात् अपि, निर्मला स्वच्छा, (तथा), वक्षोजकुङ्कुमरजोभिः दमयन्तीस्तनतटस्थघुसृणपरागैः, उदीर्णरागा संजातरक्तवर्णा (प्रवृद्धानुरागा च ), (अतः एव ) तस्याः दमयन्त्याः, द्वितीया अपरा, हृदयवृत्तिः इव चित्तवृत्तिः इव, (स्थिता), इयं एषा, मुक्तालता मौक्तिकहारः, तव भवतः, हृदि हृदये वक्षसि इत्यर्थः, आस्पदं स्थान स्थिति इति यावत् , आतनोतु करोतु ॥ ४९ ॥

मुक्ताकलापमथ तेन समर्प्यमाणं
पश्चान्नलः करतले कलयाञ्चकार ।
स्वेदोदबिन्दुचयदन्तुरितं समन्ता-
त्प्रागेव तस्य वपुरुत्पुलकं बभूव ॥ ५० ॥

**मुक्ताकलापमिति** ॥अथ अनन्तरं, तस्य नलस्य, वपुः गात्रं, प्राक एव मुक्ताहाराङ्गीकारात् पूर्वं एव, समन्तात् सर्वतः शरीरं अभितः इत्यर्थः, स्वेदोदबिन्दुचयदन्तुरितं स्वेदोदबिन्दूनां स्वेदजलकणानां चयः निकरैः दन्तुरितं आकीर्णं इत्यर्थः, (तथा ), उत्पुलकं उद्गतरोमाञ्चं च, बभूव अभवत् । तेन

दिव्यहंसेन, समर्प्यमाणं दीयमानं, मुक्ताकलापं मौक्तिकविभूषणं मुक्ताहारं तु इत्यर्थः 'कलापो भूषणे बर्हे' इत्यमरः, नलः, करतले पाणितले, पश्चात् अनन्तरं स्वेदपुलकोद्गमानन्तरं इत्यर्थः, कलयांचकार जग्राह । दमयन्तीधृतमुक्ताहारस्पर्श-समकालमेव नलः हर्षवशात् प्रस्विन्नगात्रः पुलकाङ्कितशरीरश्च आसीत् इति भावः ॥ ५० ॥

तेनोरसि प्रियसखेन निवेश्यमान-
मापिञ्जरं मृगदृशः कुचकुङ्कुमेन ।
हारं निरीक्ष्य कलितः कुसुमेषुबाणै-
रन्तर्व्यचिन्तयदिदं सुचिरं नरेन्द्रः ॥ ५१ ॥

**तेनेति** ॥ नरेन्द्रः नलमहाराजः, प्रियश्च असौ सखा च प्रियसखः तेन प्रियसखेन प्रियसुहृदा, तेन हंसेन, उरसि स्ववक्षःस्थले, निवेश्यमानं धार्यमाणं, मृगदृशः हरिणाक्ष्याः दमयन्त्याः, कुचकुङ्कुमेन स्तनतटस्थघुसृणेन, आपिञ्जरं आरक्तं, हारं मुक्तादाम, निरीक्ष्य अवलोक्य, कुसुमेषुबाणैः मन्मथशरैः, कलितः विद्धः सन् इत्यर्थः, सुचिरं चिरकालपर्यन्तं, अन्तः हृदये स्वगत इत्यर्थः, इदं वक्ष्यमाणं, व्यचिन्तयत् चिन्तयामास ॥ ५१ ॥

सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशोऽपि निकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि ॥ ५२ ॥

**सूचीमुखेनेति** ॥ 'हे मुक्ताकलाप हे मुक्ताहार, त्वं, सूच्याः सेवन्याः मुखं अग्रं तेन सूचीमुखेन सूच्यग्रेण. सकृत् एव एकवारं एव, कृतव्रणः विहित-क्षतः विरचितरन्ध्रः इत्यर्थः सन्, प्रियायाः मद्दयितायाः दमयन्त्याः, स्तनयोः कुचयोः, लुठसि घूर्णसि । (तथा सति), स्मरस्य मदनस्य, बाणैः शरैः, शतशः शतकृत्वः, निकृत्तमर्मा निकृत्तं छिन्नं मर्म मर्मप्रदेशः हृदयं इति अर्थः यस्य सः तादृशः सन् अपि, अहं, कथं केन हेतुना, स्वप्ने अपि स्वापे अपि, तां प्रियां, न विलोकयामि न पश्यामि' ॥ ५२ ॥

प्रत्यक्षरं क्षरदिवामृतनिर्झरौघ-
माकर्ण्य कर्णमधुरं वचनं खगस्य ।
तं मौनभाजमसकृत्परिरभ्य दोर्भ्या-
मानन्दमन्थरमिदं नृपतिर्बभाषे ॥ ५३ ॥

प्रत्यक्षरमिति ॥ (अथ), नृपतिः नलः, अक्षरं अक्षरं प्रति प्रत्यक्षरं एकैकस्मिन् अपि अक्षरे इत्यर्थः, अमृतनिर्झरौघं अमृतनिर्झरस्य सुधाप्रवाहस्य ओघं सन्दोहं तं, क्षरत् इव स्रवत् इव (स्थितं), (तथा), कर्णमधुरं श्रुति-मनोहरं, खगस्य हंसपक्षिणः, वचनं भाषितं, आकर्ण्य श्रुत्वा, मौनभाजं तूष्णी-भावं आश्रितं, तं पक्षिणं, दोर्भ्यां भुजाभ्यां, असकृत् शश्वत् पुनः पुनः इति यावत्, परिरभ्य आलिङ्ग्य, आनन्दमन्थरं हर्षातिशयेन स्तिमितं यथा तथा, इदं वक्ष्यमाणं, आबभाषे अवोचत् ॥ ७३ ॥

अभ्यर्थितं फलति कल्पतरुः प्रकामं
चिन्तामणिर्दिशति चिन्तितमेव भूयः ।
अप्रार्थितानि वितरन्निह चिन्तितानि
कीर्तिं तयोरपि भवानधरीकरोति ॥ ५४ ॥

आभाषणप्रकारमेव आह—

अभ्यर्थितमिति ॥ 'कल्पतरुः कल्पवृक्षः, अभ्यर्थितं अर्थिभिः प्रार्थितं एव वस्तु, प्रकामं भृशं, फलति प्रसूते प्रयच्छति इत्यर्थः । चिन्तामणिः वाञ्छितार्थप्रदः दिव्यमणिविशेषः, चिन्तितं एव ईप्सितं एव वस्तु, भूयः भृशं, दिशति प्रयच्छति । इह अस्मिन् लोके (अधुना वा), अप्रार्थितानि अयाचितानि, चिन्तितानि अभिलषितानि वस्तूनि, वितरन् यच्छन्, भवान् त्वं, तयोः कल्पतरु-चिन्तामण्योः अपि, कीर्तिं अभिलषितार्थप्रदत्वप्रयुक्तं यशः, अधरीकरोति तिर-स्कुरुते अतिशेते इत्यर्थः' ॥ ५४ ॥

अत्रान्तरे वियदशोभयदंशुपूरैः
पूर्णेन्दुसुन्दरमुखी दिवसान्तलक्ष्मीः ।

**लब्धोदयैस्त्रिषु जगत्सु गुणैरुदारै-**
**र्भैमीव तस्य हृदयं पृथिवीश्वरस्य ॥ ५५ ॥**

**अत्रान्तरे इति** ॥ अत्रान्तरे एतस्मिन् अन्तरे, पूर्णेन्दुसुन्दरमुखी पूर्णेन्दुः पूर्णचन्द्रः राकाचन्द्रः इति यावत् तद्वत् सुन्दरं मुखं यस्याः सा तादृशी, भैमी दमयन्ती, त्रिषु जगत्सु भुवनत्रितये, लब्धोदयैः प्राप्तप्रसरैः, उदारैः गम्भीरैः, गुणैः, सौशील्यादिभिः, तस्य पृथिवीश्वरस्य नलभूपतेः, हृदयं चित्तं इव, पूर्णेन्दुसुन्दरमुखी पूर्णेन्दुना सुन्दरं मुखं अग्रभागः यस्याः तादृशी, दिवसान्तलक्ष्मीः दिनावसानश्रीः प्रदोषशोभा इति यावत्, त्रिषु, जगत्सु, लब्धोदयैः लब्धप्रसरैः, उदारैः अत्युज्ज्वलैः, अंशुपूरैः तेजःप्रवाहैः, वियत् आकाशं, अशोभयत् अभूषयत् ॥ ५५ ॥

**अथ सुहृदि सरोषे वैरसेनिं जिघांसौ**
**विदधति विषमेषौ चापमारोपितज्यम् ।**
**प्रथयितुमिव भूयस्तस्य साहाय्यमिन्दुः**
**ककुभि बलभिदः स्वं बिम्बमाविश्चकार ॥ ५६ ॥**

**अथेति** ॥ अथ प्रदोषागमनानन्तरं, वीरसेनस्य अपत्यं पुमान् वैरसेनिः तं वैरसेनिं वीरसेनकुमारं नलं, हन्तुं इच्छुः जिघांसुः तस्मिन् जिघांसौ हन्तुकामे इत्यर्थः, (अतः एव), सरोषे कोपसहिते, सुहृदि निजमित्रे, विषमेषौ मन्मथे, चापं धनुः, आरोपितज्यं आततमौर्वीकं, विदधति कुर्वति सति, इन्दुः चन्द्रः, तस्य स्वसुहृदः स्मरस्य, भूयः अधिकं, साहाय्यं उपकारं, प्रथयितु इव प्रकटयितुं इव, बलभिदः बलारातेः इन्द्रस्य इति यावत् 'वास्तोष्पतिस्सुरपतिर्बलारातिः शचीपतिः' इत्यमरः, ककुभि दिशि प्राचीदिशि इत्यर्थः, स्वं निजं, बिम्बं मण्डलं, आविश्चकार प्रकटीचकार ॥ **मालिनी वृत्तम्** ॥ तल्लक्षणं तु— '**ननमयय**युतेयं मालिनी भोगिलोकैः' इति ॥ ५६ ॥

इति श्रीसांधिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते हंसदर्शनं नाम

**तृतीयः सर्गः** ॥

# चतुर्थः सर्गः ।

सुरपतेरपहाय दिशं विधु-
विशदतां क्रमशः समुपाययौ ।
मनसि तां विनिवेश्य मृगीदृशं
कलयति स्म नलस्त्वनुरागिताम् ॥ १ ॥

**सुरपतेरिति** ॥ विधुः चन्द्रः, सुराणां पतिः तस्य सुरपतेः इन्द्रस्य, दिशं ककुभं प्राचीदिशं इत्यर्थः, अपहाय त्यक्त्वा, क्रमशः क्रमेण शनैः शनैः इत्यर्थः, विशदतां वैशद्य नैर्मल्यं इति यावत्, समुपाययौ प्राप । नलः तु, तां, मृगीदृशं हरिणाक्षीं दमयन्तीं, मनसि हृदये, विनिवेश्य निधाय विचिन्त्य इत्यर्थः, अनुरागितां प्रणयित्वं, कलयति स्म प्राप इत्यर्थः ॥ अस्मिन् सर्गे प्रायः **द्रुतविलम्बितं वृत्तम्** । तल्लक्षणन्तु—'द्रुतविलम्बितमाह **नभौ भरौ** ।' इति ॥ १ ॥

बहिरुदञ्चति कैरवबान्धवे
स्फुरति चेतसि मुग्धदृशो मुखे ।
समवलम्ब्य बलं सुहृदोर्द्वयो-
रभिजघान शरैस्तमनन्यजः ॥ २ ॥

**बहिः इति** ॥ बन्धुः एव बान्धवः ( प्रज्ञादित्वात् स्वार्थे अण् प्रत्ययः) कैरवाणां कुमुदानां बान्धवः तस्मिन् कैरवबान्धवे चन्द्रे इत्यर्थः, बहिः उदञ्चति आविर्भवति सति उदयगिरेः शिखरात् ऊर्ध्वं गच्छति सति इत्यर्थः, (तथा), मुग्धदृशः वामलोचनायाः दमयन्त्याः इत्यर्थः, मुखे आनने, चेतसि नलहृदये, स्फुरति प्रकाशमाने सति, अन्यस्मात् न जायते इति अनन्यजः मदनः 'शंबरारिर्मनसिजः कुसुमेषुरनन्यजः ।' इत्यमरः, द्वयोः चन्द्रस्य दमयन्तीमुखस्य च

इति उभयोः, सुहृदोः मित्रयोः, बलं साहाय्यं इत्यर्थः, समवलम्ब्य समवष्टभ्य, शरैः बाणैः, तं नलं, अभिजघान अभिहतवान् पीडयामास इत्यर्थः ॥ २ ॥

विचकिलैः स्मितशालि विकस्वरैः
सुरभितं कुमुदैः क्षणदामुखम् ।
दुरवलोकमभूदवनीभुजः
स्मरशरज्वरकातरचेतसः ॥ ३ ॥

विचकिलैः इति ॥ विकस्वरैः विकसितैः (कुमुदैः इत्यत्रापि विशेषणमेतत्), विचकिलैः तदाख्यपुष्पविशेषैः, स्मितेन शालते इति स्मितशालि सञ्जातस्मितं इत्यर्थः, (तथा), कुमुदैः कैरवैः, सुरभितं वासितं सञ्जातपरिमलं इत्यर्थः, क्षणदामुखं रजनीमुखं प्रदोषः इति यावत्, स्मरस्य मदनस्य शरैः बाणैः उत्पादितः यः ज्वरः पीडा तेन कातरं व्यथितं इत्यर्थः चेतः यस्य तस्य तादृशस्य, अवनीभुजः नलमहाराजस्य, दुरवलोकं दुर्निरीक्ष्यं, अभूत् जातम् ॥ ३ ॥

अपि निमीलितमह्नि निशामुखे
कुमुदमुल्लसितश्रियमानशे ।
हृदयमस्य तदैव महीभुजः
समधिकं विधुरत्वमुपाददे ॥ ४ ॥

अपि इति ॥ अह्नि दिवसे दिवाकाले इत्यर्थः, निमीलित मुकुलित अपि, कुमुदं कैरवं, निशामुखे रजनीमुखे, उल्लसितश्रियं अत्युज्ज्वलशोभां, आनशे लेभे । तदा एव तस्मिन्नेव काले, अस्य एतस्य, महीभुजः नलमहाराजस्य, हृदयं मनः, समधिकं भृशं, विधुरत्वं विह्वलतां, उपाददे अभजत् ॥ ४ ॥

स्थितिमतां प्रथमोऽपि महाशयः
पतिरपां रजनीरमणत्विषा ।
अवनिवासवसंभवया तया
नल इवोच्चरलत्वमुपाययौ ॥ ५ ॥

स्थितिमतामिति ॥ स्थितिमतां मर्यादापालकानां स्थैर्यवतां वा, प्रथमः अग्रेसरः (तथा), महाशयः महान् विपुलः आशयः मध्यप्रदेशः यस्य सः तथो-

कः यद्वा महत् आपः आशेते अस्मिन् इति (इति समुद्रपक्षे) (महामनस्कः इति नृपतिपक्षे), अपां पतिः अपि समुद्रः अपि, रजनीरमणत्विषा रजनीरमणस्य चन्द्रस्य त्विषा कान्त्या, अवनिवासवः महीन्द्रः भीमराजः इत्यर्थः तस्मात् संभवः उत्पत्तिः यस्याः तया भीमराजदुहित्रा, तया दमयन्त्या, नलः इव, उत्तरलत्वं अस्थैर्यत्वं अधीरतां इति यावत्, उपाययौ प्राप ॥ ५ ॥

**अवकिरन्नमृतं परितः करैः**
**प्रसृमरैरमृतद्युतिरुज्ज्वलैः ।**
**मुदमुदञ्चयितुं पृथिवीभुजः**
**सरसिजस्य च नाभवदीश्वरः ॥ ६ ॥**

**अवकिरन्निति** ॥ अमृतमय्यः द्युतयः मयूखाः यस्य सः अमृतद्युतिः सुधांशुः चन्द्रः इति यावत्, प्रसृमरैः प्रसृत्वरैः प्रसरणशीलैः इत्यर्थः ('सृघस्यदः क्मरच्' इति प्रपूर्वात् सृधातोः क्मरच्प्रत्ययः), (तथा), उज्ज्वलैः प्रकाशमानैः, करैः किरणैः, परितः सर्वतः, अमृतं सुधां, अवकिरन् वर्षन् अपि ('अपकिरन्' इति पाठान्तरं), पृथिवीभुजः नलमहाराजस्य, सरसिजस्य पङ्केरुहस्य च, मुदं हर्षं (विकासं इति सरसिजपक्षे), उदञ्चयितुं उत्पादयितुं इत्यर्थः, ईश्वरः समर्थः, न अभवत् न आसीत् ॥ ६ ॥

**किसलयान्तरसन्धिषु पुञ्जितैः**
**शशभृतः किरणैरपि भूरुहाः ।**
**असमयेऽपि कथञ्चिदुदञ्चितैः**
**सुमनसां स्तवकैरिव रेजिरे ॥ ७ ॥**

**किसलयेति** ॥ भूरुहाः अपि वृक्षाश्च, किसलयान्तरसन्धिषु किसलयानां पल्लवानां अन्तरेषु अन्तरालेषु मध्यप्रदेशेषु ये सन्धयः रन्ध्राणि तेषु, पुञ्जितैः राशीकृतैः, शशभृतः चन्द्रस्य, किरणैः मयूखैः, असमये अकाले अपि, कथञ्चित् कृच्छ्रात्, उदञ्चितैः उत्पन्नैः प्रवृद्धैः वा, सुमनसां कुसुमानां, स्तवकैः इव गुच्छैः इव, रेजिरे बभुः ॥ ७ ॥

**शशिरुचः परिपीय मुहुर्मुहुः**
**सपदि तुन्दिलतां समुपेयुषी ।**

गृहचकोरवधूर्निजपञ्जरे
पृथुतरेऽपि चिराय न संममौ ॥ ८ ॥

शशिरुचः इति ॥ गृहे विद्यमाना चकोरवधूः गृहचकोरवधूः क्रीडा-चकोरी इत्यर्थः, शशिरुचः इन्दुकिरणान्, मुहुः मुहुः पुनः पुनः शश्वत् इति यावत्, परिपीय निपीय, सपदि सद्यः, तुन्दिलतां बृहत्कुक्षित्वं पीनत्वं इति यावत्, 'तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ।' इत्यमरः, समुपेयुषी प्राप्तवती सती, पृथुतरे अपि अतिविशाले अपि, निजपञ्जरे स्ववीतंसे, चिराय चिरकाल-पर्यन्तं, न संममौ न संमाति स्म पर्याप्तं अवकाशं न लेभे इत्यर्थः ॥ ८ ॥

शशिरुचा शशिकान्तगृहाङ्गणे
प्रसरदम्बुभरे सरसीयति ।
उडुगणैः परितः प्रतिबिम्बितै-
रुपहृतः कुमुदोत्करविभ्रमः ॥ ९ ॥

शशिरुचा इति ॥ शशिरुचा चन्द्रमरीच्या, प्रसरदंबुभरे प्रसरन् स्यन्दमानः अम्बुभरः जलनिवहः यस्मिन् तत् तादृशे, शशिकान्तगृहाङ्गणे शशिकान्तैः चन्द्रकान्तमणिभिः निर्मितं यत् गृहं तस्य अङ्गणं चत्वरं तस्मिन्, सरसीयति सरसी कासारः स इव आचरति सति ('उपमानादाचारे' इति सरसीशब्दात् आचारार्थे क्यच्प्रत्ययः), परितः अभितः, प्रतिबिम्बितैः प्रति-फलितैः, उडुगणैः उडूनां नक्षत्राणां गणैः समूहैः, कुमुदोत्करविभ्रमः कुमुदानां कैरवाणां यः उत्करः निचयः तस्य विभ्रमः विलासः शोभा इति यावत् शङ्का वा, उपहृतः उपनीतः प्राप्तः इत्यर्थः ॥ ९ ॥

उपहसन्निव हंसकदम्बकं
विचकिलं कलयन्निव निष्प्रभम् ।
अपहरन्निव हारलताश्रियं
शशिरुचां निचयः समरोचत ॥ १० ॥

उपहसन् इति ॥ शशिरुचां इन्दुकिरणानां, निचयः समूहः, हंसकद-म्बकं हंससमूहं, उपहसन् इव परिहसन् इव, विचकिलं तदाख्यं पुष्पविशेषं,

निष्प्रभं विगतशोभं, कलयन् कुर्वन् इव, (तथा), हारलताश्रियं हारलतानां मुक्तासराणां श्रियं शोभां, अपहरन् इव तिरस्कुर्वन् इव च, समरोचत प्रचकाशे ॥

कतिचिदम्बर एव तिरोदधे
निजकरैरपराः परिषस्वजे ।
अभिससार परा अपि तारकाः
सितरुचिर्विकिरन्वसुसंपदम् ॥ ११ ॥

**कतिचित् इति** ॥ सितरुचिः चन्द्रः, वसुसंपदं वसूनां किरणानां धनानां च संपदं समृद्धिं 'देवभेदेऽनले रश्मौ वसूरत्ने धने वसु ।' इत्यमरः, 'वसुर्देवेऽग्निरश्म्योश्च वसु तोये धने मणौ ।' इति वैजयन्ती च, विकिरन् प्रसारयन् प्रवर्षन् च सन्, कतिचित् काश्चन, तारकाः नक्षत्राणि (दयिताः इति च गम्यते), अम्बरे एव आकाश एव वस्त्रे एव च, तिरोदधे आवृणोत् आच्छादितवान् इत्यर्थः । अपराः अन्याः काश्चित् तारकाः, निजकरैः स्वकिरणैः स्वपाणिभिः च, परिषस्वजे आश्लिष्टवान् । (तथा), पराः इतराः काश्चित् तारकाः, अभिससार अभ्यगच्छत् सङ्केतपूर्वं समगच्छत् इति च अर्थः ॥ ११ ॥

विकचकैरवसौरभलोलुपै-
स्तत इतः कलगुञ्जितकैतवात् ।
स्मृतिभुवस्त्रिजगद्विजयार्जितं
यश इव भ्रमरैरुदगीयत ॥ १२ ॥

**विकचेति** ॥ विकचानि विकसितानि यानि कैरवाणि कुमुदपुष्पाणि तेषां सौरभं परिमलः तस्मिन् लोलुपाः अत्यन्तं आसक्ताः तैः तथाभूतैः, भ्रमरैः अलिभिः (कर्तृभिः), ततः इतः विष्वक्, कलगुञ्जितकैतवात्, कलानि अव्यक्तमधुराणि यानि गुञ्जितानि झङ्कारशब्दाः तेषां कैतवात् व्याजात्, त्रिजगद्विजयार्जितं त्रयाणां जगतां समाहारः त्रिजगत् तस्य विजयेन अभिभवनेन अर्जितं संपादितं, स्मृतिभुवः मनोभवस्य मन्मथस्य इति यावत्, यशः कीर्तिः (कर्म), उदगीयत इव उच्चैः गानेन अवर्ण्यत इव ॥ १२ ॥

अथ हृदि प्रसभं विहितास्पदैः
स्मरशरैरिव कम्पितशङ्कया ।

सहजया स च धीरतयोज्झितः
खगमिदं निजगाद नरेश्वरः ॥ १३ ॥

अथ इति ॥ अथ अनन्तरं, सः, नरेश्वरः च नलमहाराजः अपि, हृदि मनसि, प्रसभं बलात्कारेण, विहितास्पदैः विहितं कृतं आस्पदं स्थानं यैः तैः तथाभूतैः, स्मरशरैः इव मदनबाणैः इव, लंभिता प्रापिता शङ्का भयं यस्याः सा तथाभूतया, सहजया निसर्गसिद्धया अपि, धीरतया धैर्येण, उज्झितः परित्यक्तः सन्, खगं हंसपक्षिणं, इदं वक्ष्यमाणं, निजगाद उवाच ॥ १३ ॥

तव निपीय सखे वचनामृतं
श्रवणयुग्ममभून्मम शीतलम् ।
तदवधि प्रसभं दहतीव मे
हृदयमर्म कथं स्मरमुर्मुरः ॥ १४ ॥

तव इति ॥ 'सखे मित्र, तव भवतः, वचनामृतं वाक्सुधां अमृतवत् अतिमधुरं तव वचनं इत्यर्थः, निपीय आस्वाद्य, मम मे, श्रवणयुग्मं श्रोत्रयुगल, शीतलं शिशिरं सुखितं इति यावत्, अभूत् आसीत् । तदवधि तदारभ्य इत्यर्थः, स्मरमुर्मुरः स्मरः मन्मथः एव मुर्मुरः तुषाग्निः, मे मम, हृदयमर्म हृदयस्य मनसः मर्म जीवनाधारभूतं स्थानं, कथं कुतः, प्रसभं हठात्, दहति इव निर्दहति इव ॥ १४ ॥

दहतु नाम सखे मलयानिलः
कवलनात्फणिनां विषदूषितः ।
अमृतदीधितिरेष सुधामयै-
रपि करैर्दहतीति महाद्भुतम् ॥ १५ ॥

दहतु इति ॥ सखे हे वयस्य, फणिनां भुजङ्गानां (कर्तरि षष्ठी) भुजङ्गैः इत्यर्थः, कवलनात् भक्षणात् हेतोः (भुजगाः वाताशनाः इति प्रसिद्धं), [illegible] विषैः सर्पगरलैः दूषितः आविलीकृतः, (अतः एव), मलयानिलः [illegible]ः, दहतु नाम (नाम इति अङ्गीकारे संभावनायां वा) । एषः अय, [illegible]धितिः सुधांशुः चन्द्रः इति यावत्, सुधामयैः अमृतप्रचुरैः अपि अति-

शीतलैः अपि इत्यर्थः, करैः किरणैः, (मां), दहति, इति, (अत्, एतत्), महाद्भुतं अत्यन्ताश्चर्यकरम् ॥ १५ ॥

ध्रुवमियं मलयानिलचारिणां
फणभृतां श्वसितोर्मिपरम्परा ।
न पुनरेष स दक्षिणमारुत-
स्तनुभृतां वितनोति सुखानि यः ॥ १६ ॥

ध्रुवं इति ॥ इयं एषा, नूनं ध्रुवं, मलयानिलचारिणां मलयानिलं मन्दमारुतं ताच्छील्येन चरन्ति भक्षयन्ति इति तेषां मलयमरुद्भक्षणशीलानां इत्यर्थः, फणान् स्फटाः बिभ्रति इति फणभृतः तेषां फणभृतां फणिनां सर्पाणां इति यावत् 'स्फटायान्तु फणा द्वयोः' इत्यमरः, श्वसितोर्मिपरंपरा श्वसितानां निःश्वासवायूनां याः ऊर्मयः तरङ्गाः तासां परंपरा श्रेणिः, (भवति)। एषः पुनः अय तु, यः, तनुभृतां शरीरिणां, सुखानि सौख्यानि, वितनोति करोति; सः तथाविधः, दक्षिणमारुतः मन्दानिलः, न (भवति) ॥ १६ ॥

दहति मे हृदयं हिमदीधिति-
स्तुदति चन्दनशैलसमीरणः ।
दलयति प्रसभं पिकपञ्चमः
किमवलम्ब्य सखेऽस्तु सुखोदयः ॥ १७ ॥

दहति इति ॥ सखे हे मित्र हंस, हिमदीधितिः हिमांशुः चन्द्रः इति यावत्, मे मम, हृदयं मानसं, दहति सन्तापयति । चन्दनशैलसमीरणः चन्दनप्रचुरः शैलः चन्दनशैलः मलयाचलः इत्यर्थः तस्मात् उद्भवन् समीरणः वायुः मन्दमारुतः इत्यर्थः, (मे हृदयं), तुदति पीडयति । (तथा), पिकपञ्चमः पिकानां कोकिलानां पञ्चमः पञ्चमध्वनिः 'पुष्पसाधारणे काले पिकः कूजति पञ्चमं ।' इत्यमरः, प्रसभं प्रसह्य बलात्कारेण इत्यर्थः, (मे हृदयं), दलयति विदारयति । (एवं स्थिते सति), किं कीदृशं वस्तु वा, अवलम्ब्य अवष्टभ्य, (मे), सुखोदयः सुखलाभः, अस्तु भवेत् इत्यर्थः ॥ १७ ॥

ज्वलति शीतरुचिर्विसदङ्गणे
तपति दिक्षु मरुन्मलयोद्भवः ।

**किरति मर्मसु पञ्चशरः शरान्**
**सुखलवोऽपि सखे मम दुर्लभः ॥ १८ ॥**

**ज्वलतीति** ॥ शीतरुचिः चन्द्रः, वियदङ्गणे वियतः आकाशस्य अङ्गणे अजिरे गगनाभोगे इत्यर्थः 'अङ्गणं चत्वराजिरे' इत्यमरः, ज्वलति अग्निवत् अत्युष्णः दीप्यते इत्यर्थः । मलयोद्भवः मलयाद्रिसंभवः, मरुत् वातः मन्दानिलः इत्यर्थः, दिक्षु आशासु विष्वक् इत्यर्थः, तपति दहति । (तथा), पञ्च शराः यस्य सः पञ्चशरः मन्मथः च, मर्मसु मम मर्मस्थानेषु, शरान् बाणान्, किरति वर्षति । (तस्मात्), सखे भो वयस्य, सुखलवः अपि सौख्यलेशः अपि, मम मे, दुर्लभः दुष्प्रापः, (अस्ति) ॥ १८ ॥

**स्मृतिभुवो यदि पञ्च शिलीमुखा**
**यदि च ते कुसुमैरुपपादिताः ।**
**अविरतं निपतन्ति सहस्रशः**
**कथममी हृदयं दलयन्ति च ॥ १९ ॥**

**स्मृतिभुवः इति** ॥ स्मृतिभुवः मनोभवस्य, शिलीमुखाः बाणाः, पञ्च यदि पञ्चसङ्ख्याकाः एव चेत्, ते च पञ्चापि बाणाः, कुसुमैः पुष्पैः, उपपादिताः यदि निर्मिताः चेत्, (तर्हि), अमी इमे पञ्चैव बाणाः, कथ कस्मात् हेतोः, अविरतं अजस्रं, सहस्रशः सहस्रसङ्ख्यया, निपतन्ति । (तथा), कथ, हृदयं मम चेतः, दलयन्ति च विदारयन्ति च ॥ ('यदि तत्वतः मनोभवस्य पञ्चैव बाणाः, तर्हि तेषां प्रयोगे पञ्चकृत्वः एव पतनेन भाव्य न तु एवं सहस्रसंख्यया अविरतं तेषां पतन भवेत । तस्मात् मनोभुवः बाणाः बहुसहस्रसंख्याकाः इति मन्ये । तथा मनोभवस्य बाणाः वस्तुतः यदि पुष्पैः निर्मिताः तर्हि कुसुममयैः अत एव अतिमृदुलैः तैः एवं मम मनोविदारणं दुश्शकं; तस्मात् तैः वज्रनिर्मितैः भाव्यं इति मन्ये' इति भावः) ॥ १९ ॥

**हिमरुचिर्दहतीति किमद्भुतं**
**बहिरसौ विशदः कलुषो हृदि ।**
**अबुध एष जनस्तु यदीदृशा-**
**दपि सुखाधिगमाय समुत्सुकः ॥ २० ॥**

**हिमरुचिः इति** ॥ हिमरुचिः शीतकिरणः चन्द्रः, दहति सन्तापयति ; इति, ( अत्र विषये ), किं अद्भुतं किं आश्चर्यं ( अस्ति ) न किमपि आश्चर्यं अस्ति इत्यर्थः । ( यतः ), असौ एषः हिमरुचिः, बहिः बहिर्भागे एव, विशदः शुद्धः निर्मलः इति यावत् ; हृदि अन्तर्भागे तु, कलुषः कलङ्कयुक्तः, ( अस्ति ) । एषः परिदृश्यमानः इत्यर्थः, जनः तु लोकः पुनः, अबुधः ज्ञानशून्यः, (भवति) । यत् यस्मात् कारणात्, ( एषः जनः ), ईदृशात् एतादृशात् बहिर्विशदत्वान्तःकलुषत्वविशिष्टात् चन्द्रात् अपि, सुखाधिगमाय सुखप्राप्तये, समुत्सुकः समुत्कण्ठितः, ( वर्तते ) ॥ २० ॥

**तव सखे रचितोऽद्य मयाञ्जलिः**
**शशधरः स तथा प्रतिबोध्यताम् ।**
**समधिरुह्य निजाङ्कमृगं क्षणा-**
**दयमुपैति यथास्तमहीधरम् ॥ २१ ॥**

**तव इति** ॥ सखे मित्र, तव ते, अद्य संप्रति, मया, अञ्जलिः अञ्जलिबन्धः, रचितः कृतः । यथा येन प्रकारेण, अयं एषः, शशधरः चन्द्रः, निजाङ्कमृगं स्वचिह्नभूतं हरिणं, अधिरुह्य अधिष्ठाय, क्षणात् क्षणकालात् शीघ्रं इत्यर्थः, अस्तमहीधरं अस्ताचलं, उपैति उपगमिष्यति इत्यर्थः ; तथा तेन प्रकारेण, सः शशधरः, ( त्वया ), प्रतिबोध्यतां निवेद्यतां ज्ञाप्यतां वा ॥ २१ ॥

**शशिनमंसतटे विनिवेश्य वा**
**नय सखे चरमाचलकन्दरम् ।**
**तव विरिञ्चिविमानकधुर्यता-**
**मुपगतस्य भविष्यति कः श्रमः ॥ २२ ॥**

**शशिनं इति** ॥ सखे प्रिय हंस, वा अथवा, अंसतटे तव स्कन्धदेशे, शशिनं चन्द्रं, विनिवेश्य निधाय आरोप्य इति यावत्, चरमाचलकन्दरं चरमाचलस्य अस्तगिरेः कन्दरं गुहां, नय प्रापय । विरिञ्चिविमानकधुर्यतां विरिञ्चेः ब्रह्मणः विमानकस्य व्योमयानस्य धुर्यतां धूर्वहतां वाहकतां इत्यर्थः, उपगतस्य प्राप्तस्य, तव ते, (एतच्चन्द्रोद्वहने), कः श्रमः खेदः, भविष्यति न कोपि श्रमः भविष्यति इत्यर्थः ॥ २२ ॥

उदयमद्रिमधिश्रयितुं सखे
त्वरय संप्रति वा दिनवल्लभम् ।
वसुसमृद्धिमदं शमयन्विधो-
र्विरहिणां स भवत्ववलम्बनम् ॥ २३ ॥

उदयं इति ॥ सखे हे वयस्य, वा अथवा, दिनवल्लभं दिवसेश्वरं सूर्यं इति यावत्, सम्प्रति इदानीं, उदय अद्रिं उदयाचलं, अधिश्रयितुं अध्यासितुं, त्वरय शीघ्रं प्रेरय । (यतः), सः दिनवल्लभः, विधोः इन्दोः, वसुसमृद्धिमद वसु-समृद्धया किरणसम्पत्त्या जातः यः मदः गर्वः तं (धनसमृद्धया जात गर्वं इति च गम्यते), शमयन् व्यपोहयन् सन्, विरहिणां वियोगिनां, अवलम्बन अवष्टंभनं, भवतु ॥ २३ ॥

कथय किं नु कदापकृतं मया
कुलगुरोरपि चन्द्रमसः सखे ।
मयि निरस्तकृपः कथमन्यथा
किराति जीवितहारि विषं करैः ॥ २४ ॥

कथयेति ॥ सखे मित्र, कुलगुरोः अपि, मद्वंशकूटस्थस्य अपि, चन्द्र-मसः इन्दोः (विषये), मया, कदा कदाचित् इत्यर्थः, अपकृतं किं नु अपराद्धं किं वा ; कथय वद । अन्यथा नोचेत् इत्यर्थः, (सः), मयि मम उपरि, निरस्त-कृपः वीतदयः सन्, करैः स्वकिरणैः, जीवितहारि प्राणापहरणशीलं, विष गरलं, कथं कस्मात् हेतोः, किरति वर्षति ॥ २४ ॥

इदमुदीरयतः पृथिवीपतेः
कथमपि प्रतिपद्य पदं दृशोः ।
सकृपयेव तदा किल निद्रया
समुपदर्शि नरेन्द्रसुता पुरः ॥ २५ ॥

इदमिति ॥ पृथिवीपतेः नलमहाराजस्य, इदं पूर्वोक्तं, उदीरयतः भाष-माणस्य सतः, सकृपया नलोपरिसंजातानुकम्पया इव, निद्रया स्वापेन, तदा किल तस्मिन् समये एव, दृशोः नलस्य नयनयोः, पदं स्थानं आश्रयं वा, कथमपि

कृच्छ्रात्, प्रतिपद्य अवाप्य, नरेन्द्रसुता भीमराजतनया दमयन्ती, क्षणं क्षणकालं, पुरः तस्य अग्रे, अदर्शि आविरकारि । (सः कृच्छ्रेण निद्रां लब्ध्वा दमयन्तीमपि क्षणं स्वप्ने अपश्यत् इति भावः) ॥ २५ ॥

अथ नलः प्रतिबुध्य ससंभ्रमं
ततः इतो विनिवेश्य विलोचने ।
प्रियतमां सविधे नविलोकय-
न्निदमुवाच मनोभवकातरः ॥ २६ ॥

अथेति ॥ अथ स्वप्ने दमयन्तीदर्शनानन्तरं, नलः, ससंभ्रमं सोद्वेगं यथा तथा, प्रतिबुध्य विगतनिद्रो भूत्वा, विलोचने नेत्रे, ततः इतः इतस्ततः सर्वतः इति यावत्, विनिवेश्य विक्षिप्य, सविधे स्वसमीपे, प्रियतमां निजदयितां दमयन्तीं, नविलोकयन् अपश्यन् सन्, (अतः एव), मनोभवकातरः मनोभवेन मन्मथेन मदनबाधया इत्यर्थः कातरः उद्विग्नः सन्, इदं वक्ष्यमाणं, उवाच बभाषे ॥ २६ ॥

मम कृते मृदुलाङ्गि दवीयसीं
सरणिमाशु विलङ्घ्य यदागतम् ।
तदिदमाचरितं सुदति त्वया
समुचितं प्रणयस्य गरीयसः ॥ २७ ॥

मम इति ॥ ' मृदुलानि कोमलानि अङ्गानि अवयवाः यस्याः तत्संबोधनं मृदुलाङ्गि हे सुकुमारावयवे, शोभनाः दन्ताः यस्याः तत्संबोधनं सुदति मनोहरदन्तपङ्क्तिविराजिते हे दमयन्ति, मम कृते मदर्थे मां उद्दिश्य इति यावत्, दवीयसीं अत्यन्तविप्रकृष्टां अपि, सरणिं मार्गं, आशु शीघ्रं, विलङ्घ्य अतिक्रम्य, त्वया भवत्या, आगतं इह प्राप्तं इति यत्, तत्, इदं एतत् त्वदागमनं, गरीयसः अतिमहतः, प्रणयस्य त्वदनुरागस्य, समुचितं अनुरूपं, आचरित चेष्टितम् ॥ २७ ॥

अपकृतं त्वमुना मम निर्भरं
भुजयुगेन वृथा परिणाहिना ।

वलयतां समुपेत्य निजान्तरे
त्वमसि यत्र चिराय निवेशिता ॥ २८ ॥

अपकृतं इति ॥ तु किन्तु, वृथा मुधा निष्प्रयोजनं यथा तथा इत्यर्थः, परिणाहिना परिणाहवता विशालेन इत्यर्थः, अमुना अनेन, मम, भुजयुगेन बाहुयुगलेन, अपकृतं अपराद्धं अपराधः कृतः इत्यर्थः । यत् यस्मात् कारणात्, (भुजयुगेन), वलयतां मण्डलाकारतां, समुपेत्य प्राप्य, निजान्तरे स्वमध्यप्रदेशे भुजान्तरे इति यावत्, त्वं, निर्भरं सुदृढं, चिराय सुचिरं, निवेशिता निक्षिप्ता आलिङ्गिता इत्यर्थः, न असि न भवसि ॥ २८ ॥

स्मितविकस्वरया दशनश्रिया
किमपि कन्दलिताधरपल्लवम् ।
पुनरुपैष्यति लोचनगोचरं
मम कदा तव सुन्दरि तन्मुखम् ॥ २९ ॥

स्मितेति ॥ सुन्दरि हे लावण्यवति दमयन्ति, स्मितविकस्वरया स्मितेन मन्दहासेन विकस्वरया विकसितया विस्फुरन्त्या इत्यर्थः, दशनश्रिया दशनानां दन्तानां श्रीः कान्तिः तया, किमपि अनिर्वचनीयं यथा तथा सुभृशं वा, कन्दलिताधरपल्लवं कन्दलितः सञ्जातकन्दलः अधरः पल्लवः इव अधरपल्लवः यस्य तत् तादृशं, तत् तादृक्, तव ते, मुखं, कदा कस्मिन् समये, पुनः भूयः अपि, मम मे, लोचनगोचरं नयनविषयं, उपैष्यति उपगमिष्यति ॥ २९ ॥

धृतकुरङ्गमदप्लुततूलिकं
मम करं मकरीलिखनोन्मुखम् ।
तव कपोलतले पुलकोद्गमः
सुमुखि नेष्यति मन्थरतां कदा ॥ ३० ॥

धृतेति ॥ सुमुखि हे सुवदने, धृता गृहीता कुरङ्गमदेन मृगमदेन कस्तूर्या इति यावत् प्लुता क्लिन्ना तूलिका कूर्चिका येन तं तादृशं, तव ते, कपोलतले गण्डस्थले, मकरीलिखनोन्मुखं मकरीलिखने मकरीपत्ररचने उन्मुखः तत्परः तादृशं, मम मे, करं हस्तं (कर्म), पुलकोद्गमः पुलकस्य रोमाञ्चस्य उद्गमः उद्भेदः, कदा कस्मिन् समये, मन्थरतां अलसतां, नेष्यति प्रापयिष्यति ॥ ३० ॥

स्मरविमर्दविशृङ्खलबन्धनं
लुलितमंसतटे शिथिलस्रजम् ।
तव कदा सुतनो कबरीभरं
निगडयिष्यति पाणियुगं मम ॥ ३१ ॥

स्मरेति ॥ सुतनो हे शोभनाङ्गि, मम मे, पाणियुगं करयुगलं (कर्तृ), स्मरविमर्दे मदनकदने सुरतसमये इत्यर्थः विशृङ्खलं विश्लथं बन्धनं बन्धः यस्य तं तादृशं, ( अतः एव ), अंसतटे स्कन्धदेशे, लुलितं विप्रकीर्णं, ( तथा ), शिथिलस्रजं शिथिलाः स्रस्ताः स्रजः यस्य तं तादृशं, तव ते, कबरीभरं केशपाशं, कदा कस्मिन् काले, निगडयिष्यति उद्ग्रथिष्यति ॥ ३१ ॥

कृतकरोषजुषस्तव यावके
चरणयोर्नमता शिरसा हृते ।
विरचयन्परिकर्म सवेपथु-
र्मम कदा सुकृती भविता करः ॥ ३२ ॥

कृतकेति ॥ कृतकरोषजुषः कृतकरोषं प्रणयकोपं जुषते भजति इति कृतकरोषजुट् तस्याः प्रणयकोपवत्याः इत्यर्थः, तव भवत्याः, चरणयोः पदयोः पादयुगले इति यावत्, नमता कोपशान्त्यर्थं प्रणाम कुर्वता, शिरसा मम शीर्षेण, यावके त्वत्पादस्थालक्तकरसे, हृते अपहृते प्रमृष्टे सति इत्यर्थः, मम मे, करः पाणिः, सवेपथुः वेपथुना सहितः सकम्पः सन्, परिकर्म प्रसाधनं यावकरसरञ्जनरूपं अलंकारं इत्यर्थः, विरचयन् कुर्वन् सन्, कदा कस्मिन् समये, सुकृती भाग्यशाली, भविता भविष्यति इत्यर्थः ॥ ३२ ॥

नयनयुग्म जनुस्तव निष्फलं
प्रणयिनीं न चिराय यदीक्षसे ।
त्वमसि मानस पुण्यतमं यतः
शशिमुखी सततं त्वयि खेलति ॥ ३३ ॥

नयनेति ॥ नयनयुग्म हे नेत्रयुगलं, यत् यस्मात् कारणात्, प्रणयिनीं मद्दयितां दमयन्तीं, चिराय चिरकालपर्यन्तं, न ईक्षसे न पश्यसि ; (तत् तस्मात् कारणात्), तव ते (नयनयुग्मस्य इत्यर्थः), जनुः जन्म, निष्फलं निष्प्र-

योजनं वृथा इत्यर्थः, (अस्ति) ॥ मानस हे मम चित्त, त्वं, पुण्यतमं अत्यन्तभाग्यशालि, असि भवसि; यतः यस्मात् कारणात्, शशिमुखी इन्दुवदना दमयन्ती, त्वयि भवत्सकाशे, सततं सर्वदा, खेलति क्रीडति सन्निहिता वर्तते इत्यर्थः॥

तव कपोलतले विमलत्विषि
प्रतिफलन्नविभावितमण्डलः।
विलसदङ्कमृगस्तनुते शशी
मृगमदद्रवपत्रविशेषताम् ॥ ३४ ॥

**तव इति** ॥ विमला त्विट् यस्य तत् तस्मिन् विमलत्विषि निर्मलकान्तिसपन्ने, तव ते, कपोलतले गण्डप्रदेशे, प्रतिफलन् प्रतिबिम्बयन्, अविभावितमण्डलः अविभावितं त्वद्गण्डस्थलकान्त्यतिशयात् अनालक्षितं मण्डलं निजबिम्ब यस्य सः तादृशः, शशी चन्द्रः, विलसदङ्कमृगः विलसन् कपोलतलकान्त्या पगभागतया प्रकाशमानः अङ्कमृगः स्वचिह्नभूतः हरिणः यस्य सः तादृशः सन्, मृगमदद्रवपत्रविशेषतां कस्तूरीद्रवविरचितमकरिकादिपत्रविशेषत्व, तनुते कुरुते भजते इत्यर्थः ॥ ३४ ॥

ध्रुवमसि त्वमिहैव तिरोहिता
विरहपाण्डुवपुः शशिरोचिषा।
इदमिदं तव नूपुरशिञ्जितं
श्रवणयोः सविधे मम जृम्भते ॥ ३५ ॥

**ध्रुवं इति** ॥ विरहपाण्डुवपुः विरहेण मम विश्लेषेण पाण्डु पाण्डुरवर्णं वपुः शरीरं यस्याः सा तादृशी, त्वं, शशिरोचिषा चन्द्रकान्त्या, तिरोहिता अन्तर्हिता सती, ध्रुवं नूनं, इहैव अत्रैव, असि वर्तसे। (यतः), इदं इदं पुनः पुनः श्रूयमाणं एतत्, तव ते, नूपुरशिञ्जितं नूपुरयोः मञ्जीरयोः शिञ्जितं शिञ्जितध्वनिः, मम मे, श्रवणयोः कर्णयोः, सविधे समीपे, जृम्भते वर्धते ॥ ३५ ॥

क्व ते शिरीषाधिककोमलं वपुः
क्व लङ्घनं तन्वि दवीयसः पथः।
निषीद तन्मे क्षणमङ्कसीमनि
क्रमं कराभ्यां विनयामि पादयोः ॥ ३६ ॥

**क इति** ॥ हे तन्वि हे कृशाङ्गि, शिरीषाधिककोमल शिरीषपुष्पादपि अत्यन्तसुकुमार, ते तव, वपुः शरीर, क । दवीयसः अत्यन्तदूरस्य, पथः मार्गस्य, लङ्घन अतिक्रमणं गमन इति यावत्, क । ( द्वौ कशब्दौ महदन्तरं सूचयतः ) । तत् तस्मात् हेतोः, मे मम, अङ्कसीमनि उत्सङ्गप्रदेशे, क्षण किञ्चित्काल, निषीद उपविश । ( यतः ), कराभ्यां मम पाणियुगलेन, पादयोः त्वच्चरणयोः, क्लम क्लान्ति दूराध्वगमनजनितखेद इत्यर्थः, विनयामि पादसंवाहनेन अपनोदयामि इत्यर्थः । **वंशस्थं** वृत्तम --'**जतौ** तु वशस्थमुदीरित **जरौ**' । इति लक्षणात् ॥ ३६ ॥

**अध्वक्लान्त्या मुकुलितमिदं द्वन्द्वमुन्मीलयाक्ष्णो-**
**भूयो भूयः कुवलमयी दिश्यतां दिक्षु वृष्टिः ।**
**व्रीडानम्रं क्षणमपि नयोन्नम्रतामेतदास्यं**
**व्योम्नि स्मेरं भवतु कमलं पश्यतः शीतभानोः ॥ ३७ ॥**

**अध्वेति** ॥ ( हे प्रिये ), अध्वक्लान्त्या मार्गश्रमेण, मुकुलित निर्मालित, इदं एतत्, अक्ष्णोः द्वन्द्वं तव नयनयुगल, उन्मीलय उन्मिषित कुरु । दिक्षु सर्वासु दिशासु, कुवलयमयी नीलोत्पलमयी, वृष्टिः वर्ष, ( दृष्टिः इति पाठे दृष्टिविक्षेप इत्यर्थ ), भूयो भूय मुहुर्मुहु असकृत् इति यावत, दिश्यता दीयतां क्रियतां इत्यर्थः । ( तथा ), व्रीडानम्र व्रीडया लज्जया नम्र आनत, एतत्, आस्य तव वदन, क्षण अपि क्षणकालमपि, उन्नम्रतां उत्क्षिप्तत्व, नय प्रापय । (एतेन), व्योम्नि आकाशे, शीतभानो चन्द्रस्य, पश्यतः प्रेक्षमाणस्य सतः एव पश्यन्त शीतभानु अनादृत्य इत्यर्थ, कमल पद्म ( त्वन्मुखरूपपङ्कज इत्यर्थ ), स्मेर विकच, भवतु ॥ **मन्दाक्रान्ता** वृत्तम् ॥ तल्लक्षणन्तु 'मन्दाक्रान्ताम्बुधिरसनगैर्**मो भनौ तौ गयुग्मम्** ॥ ३७ ॥

**कथं कथं मामपहाय भाविनि**
**त्वरावती त्वं पुनरेव गच्छसि ।**
**निरागसि प्रेयसि केन हेतुना**
**मयि क्षणं दक्षिणतां न रक्षसि ॥ ३८ ॥**

**कथं इति** ॥ भाविनि हे प्रशस्ताभिप्राये, पुनरेव भूयोऽपि, मां, अप-

हाय विसृज्य, त्वरावती सत्वरा त्वरितगतिः सती इत्यर्थः, कथं कथं केन वा हेतुना (अत्यादरसूचनार्थं द्विरुक्तिः), गच्छसि यासि । हे प्रेयसि हे प्रियतमे, मयि, निरागसि निरपराधे सत्यपि (यद्वा निरागसि मयि विषये), केन हेतुना कस्मात् हेतोः इत्यर्थः, क्षणं किञ्चित्कालं, दक्षिणतां दाक्षिण्यं अनुरागं इति यावत्, न रक्षसि न वहसि इत्यर्थः ॥ वंशस्थं वृत्तम् ॥ ३८ ॥

तथातिभूमिं भवतैव लम्भितं
कथं सखे सौहृदमाशु विस्मृतम् ।
इतः प्रयान्ती मम जीवनेश्वरी
प्रसाद्य यन्नैव निवर्त्यते त्वया ॥ ३९ ॥

**तथा इति** ॥ सखे हे मित्र हंस, भवता एव त्वया एव, तथा तेन प्रकारेण, अतिभूमिं परां कोटिं, लंभितं आरोपितं, सौहृदं आवयोः सख्यं, कथं केन हेतुना, आशु शीघ्रं, विस्मृतं । यत् यस्मात् कारणात्, इतः अस्मात् प्रदेशात् मत्सकाशात् वा, प्रयान्ती निर्गच्छन्ती, मम मे, जीवनेश्वरी प्राणेश्वरी, प्रसाद्य परिसान्त्व्य, त्वया भवता, न निवर्त्यते न प्रत्यानीयते । **वंशस्थं** वृत्तम् ॥

इतः प्रयाता पदवीं दवीयसी-
मदृश्यतां यास्यति जीवितेश्वरी ।
अनुव्रजन्नाशु निवर्तयामि तां
सखे क्षणं पक्षयुगं प्रयच्छ मे ॥ ४० ॥

**इतः इति** ॥ इतः अस्मात् स्थानात्, दवीयसीं अत्यन्तविप्रकृष्टां दूरतरां इति यावत्, पदवीं मार्गं, प्रयाता प्रस्थिता, जीवितेश्वरी मत्प्राणेश्वरी, अदृश्यतां नयनागोचरत्वं, यास्यति गमिष्यति । (तस्मात्), तां, अनुव्रजन् अनुगच्छन् सन्, आशु शीघ्रं, निवर्तयामि परावर्तयामि । सखे मित्र हंस, क्षणं मुहूर्तं, पक्षयुगं पक्षद्वयं, मे मह्यं, प्रयच्छ देहि शीघ्रगमनार्थं मां, त्वत्पक्षद्वयेन उद्वह इत्यर्थः ॥ **वंशस्थं** वृत्तम् ॥ ४० ॥

आश्वासनार्थमिव मे कमले विधौ च
लक्ष्मीलवं तव मुखस्य विधिर्व्यधत्त ।
निद्रार्तिं पूर्वमनयोरपरस्तु जाग्र-
न्मर्माणि हन्त मम कृन्तति किं करोमि ॥ ४१ ॥

**आश्वासनार्थमिति** ॥ (हे प्रियतमे), विधिः विधाता स्रष्टा इति यावत्, मे त्वद्विरहविह्वलस्य मम, आश्वासनार्थं इव मनोविनोदनार्थं इव, कमले पङ्कजे, विधौ चन्द्रे च, तव भवत्याः, मुखस्य वदनस्य, लक्ष्मीलवं लक्ष्म्याः शोभायाः सौन्दर्यस्य इति यावत् लवं लेशं एकदेशं इत्यर्थः, व्यधत्त असृजत् । अनयोः एतयोः कमलचन्द्रयोः मध्ये, पूर्वं आद्यं कमलं इत्यर्थः, निद्राति स्वपिति मुकुलितं वर्तते इत्यर्थः । अपरः तु द्वितीयः चन्द्रः पुनः इत्यर्थः, जाग्रत् वीतनिद्रः सन् प्रकाशमानः सन् इत्यर्थः, मम मे, मर्माणि मर्मस्थानानि, कृन्तति भिनत्ति । किं, करोमि विधास्यामि इत्यर्थः ॥ **वसन्ततिलकं** वृत्तम् ॥ ४१ ॥

**इति विलपितमस्य मेदिनीन्दोः**
**स्मरविधुरीकृतचेतसो निशम्य ।**
**प्रतिपदममृतद्रवं विमुञ्चन्**
**वचनमुवाच दशोचितं विहङ्गः ॥ ४२ ॥**

**इतीति** ॥ इति इत्थं, स्मरविधुरीकृतचेतसः मदनविह्वलीकृतचित्तस्य, अस्य एतस्य, मेदिनीन्दोः भूचन्द्रस्य महीपतेः नलस्य इत्यर्थः, विलपितं प्रलापं, निशम्य आकर्ण्य, विहङ्गः हंसपक्षी, प्रतिपदं प्रत्यक्षरं इत्यर्थः, अमृतद्रवं सुधारसं, विमुञ्चन् विकिरन् सन्, दशोचितं तत्कालोचितं, वचनं वाक्यं, उवाच अब्रवीत ॥ **पुष्पिताग्रा** वृत्तम् ॥ तल्लक्षणन्तु—'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा ।' ॥ ४२ ॥

**कुवलयदृशि तस्यामेष भावानुबन्ध-**
**स्तव निषधनरेन्द्र प्रीतये कस्य न स्यात् ।**
**भवति हि मधुलक्ष्म्याः साहचर्यं प्रपन्नः**
**समधिकमभिनन्द्यश्चन्दनाद्रेः समीरः ॥ ४३ ॥**

**कुवलयेति** ॥ निषधनरेन्द्र निषधदेशाधिपते नलमहाराज, कुवलयदृशि नीलोत्पलाक्ष्यां, तस्यां दमयन्त्यां, एषः अयं, तव ते, भावानुबन्धः मनोबन्धः अनुरागः इत्यर्थः, कस्य जनस्य, प्रीतये सन्तोषाय, न स्यात् न भवेत् सर्वस्यापि सन्तोषाय भवेत् इत्यर्थः । हि यस्मात् कारणात्, मधुलक्ष्म्याः मधोः वसन्तर्तोः लक्ष्मीः शोभा समृद्धिः वा तस्याः, साहचर्यं संसर्गं, प्रपन्नः संप्राप्तः, चन्दनाद्रेः मलयाचलस्य, समीरः मन्दमारुतः इत्यर्थः, समधिकं भृशं, अभिनन्द्यः श्लाघ-

नीयः, भवति ॥ **मालिनी** वृत्तम् । तल्लक्षणन्तु—'**ननमयययुतेयं** मालिनी भोगिलोकैः ।' ॥ ४३ ॥

**धैर्यं निधाय मनसि प्रतिपालयेदं**
**क्ष्मावल्लभ क्षणमिव क्षणदावसानम् ।**
**प्रत्यूष एव भवतोऽभिमतार्थसिद्धे-**
**र्द्वारं भविष्यति विसङ्घटितापिधानम् ॥ ४४ ॥**

**धैर्यं इति** ॥ क्ष्मावल्लभ हे महीपते, मनसि चित्ते, धैर्यं धीरतां, निधाय निक्षिप्य, इदं एतत्, क्षणदावसानं क्षणदायाः रात्रेः अवसानं अन्तं अपगमं इति यावत्, क्षणमिव क्षणकालमिव, प्रतिपालय प्रतीक्षस्व । प्रत्यूषे एव, उषःकाले एव, भवतः तव, अभिमतार्थसिद्धेः अभिमतः अभिलषितः यः अर्थः कार्यं तस्य सिद्धिः निष्पत्तिः तस्याः, द्वारं अधिगमनमार्गः इत्यर्थः, विसंघटितापिधानं विसंघटितं विवृत उद्घाटित इति यावत् अपिधान आच्छादन आवरणं वा यस्य तत् तादृशं, भविष्यति ॥ **वसन्ततिलकं** वृत्तम् ॥ ४४ ॥

**इति वचनमुदीर्य मेदिनीन्द्रं**
**विरमति तत्र विरिञ्चियानधुर्ये ।**
**अनुवदितुमिवास्य वाचमुच्चै-**
**रुदचरदाशु निशान्तशङ्खनादः ॥ ४५ ॥**

**इति इति** ॥ विरिञ्चियानधुर्ये ब्रह्मणः वाहनधूर्वहे हंसे, इति एवं, मेदिनीन्द्र नलमहाराजं प्रति, वचनं वाक्यं, उदीर्य उक्त्वा, विरमति विरते सति, तत्र तस्मिन् समये (तत्र = तस्मिन् इति हंसविशेषणं वा), अस्य हंसस्य, वाचं वचनं, अनुवदितुं इव अनुवक्तुं इव, निशान्तशङ्खनादः निशान्ते रात्र्यवसाने यः शङ्खः तस्य नादः ध्वनिः, आशु क्षिप्रं, उच्चैः अतिगंभीरं यथा तथा, उदचरत् उदभूत् इत्यर्थः ॥ **पुष्पिताग्रा** वृत्तम् ॥ ४५ ॥

इति श्रीसान्धिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये
नलचरिते नलोन्मादो नाम
**चतुर्थः सर्गः ॥**

# पञ्चमः सर्गः ।

बहिर्विहाराय विशीर्णसक्थि-
निषेदुषी गर्भगृहोदरेषु ।
नभस्तुषारांशुमुखं दधाना
क्रमेण रात्रिर्जरती बभूव ॥ १ ॥

**बहिरिति** ॥ बहिर्विहाराय बहिस्सञ्चाराय बहिः सञ्चारं कर्तुं इत्यर्थः विशीर्णसक्थिः विशीर्णे विकले सक्थिनी ऊरू यस्याः सा तादृशी बहिस्सञ्चारं कर्तुं अशक्ता इत्यर्थः (इति जरती पक्षे) (समासान्तविधेरनित्यत्वात ' बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ' इति षच् न भवति), विगतः शीर्णसक्थिः अनूरुः अरुणः इति यावत् यस्यां सा इति रात्रिपक्षे. (अतः एव), गर्भगृहोदरेषु गर्भगृहाणां अन्तर्भवनानां उदरेषु अभ्यन्तरेषु एव, निषेदुषी तस्थुषी निषण्णा इति यावत् (शीतभीत्या जरत्याः, प्रभातप्रायत्वात् तमोरूपायाः रात्रेश्च भवनाभ्यन्तरे एव स्थितिः), नभस्तुषारांशुमुखं नभसि आकाशे स्थितः यः तुषारांशुः चन्द्रः तस्य मुखं बिम्बं प्रभातत्वात् निस्तेजस्कं मण्डलाकारं इन्दुं इति रात्रिपक्षे, नभसि आकाशे ये तुषाराः हिमानि यद्वा नभस्तुषाराः तुहिनशीकराः तदर्थं (तन्निवारणार्थं) अंशुः अंशुकं अवगुण्ठनवस्त्रं यस्य तत् तादृशं मुखं वदनं इति जरतीपक्षे, दधाना धारयन्ती, रात्रिः रजनी, क्रमेण शनैः शनैः, जरती जराजीर्णा परिणतप्राया इति यावत , बभूव अभवत् ॥ **उपेन्द्रवज्रा** वृत्तम ॥ १ ॥

समुत्सुकः प्राप्तुमिवास्य लक्ष्मीं
नलस्य पञ्चेषुशराकुलस्य ।
विगाहमानः ककुभं प्रतीचीं
बभूव चन्द्रः सविशेषपाण्डुः ॥ २ ॥

**समुत्सुकः इति** ॥ चन्द्रः इन्दुः, पञ्चेषुशराकुलस्य पञ्चेषोः मन्मथस्य

शरैः बाणैः आकुलस्य पीडितस्य, अस्य एतस्य, नलस्य, लक्ष्मीं विरहावस्थोचितां शरीरशोभां पाण्डुतां इत्यर्थः, प्राप्तुं लब्धुं, समुत्सुकः इव साभिलाषः इव, प्रतीचीं पश्चिमां, ककुभं दिशं, विगाहमानः आश्रितः सन्, सविशेषपाण्डुः अत्यन्तपाण्डुवर्णः, बभूव अभवत् । उपेन्द्रवज्रा वृत्तम् ॥ २ ॥

अनुद्यते भास्वति मन्दभासि
विधौ किमप्याविरभूत्तमिस्रम् ।
आसाद्य रन्ध्रं महनीयधाम्नां
मलीमसः संपदमातनोति ॥ ३ ॥

**अनुद्यते इति** ॥ भास्वति सूर्ये, अनुद्यते अनुदिते अकृतोदये सति इत्यर्थः, विधौ चन्द्रे च, मन्दभासि मन्दा क्षीणा भाः कान्तिः यस्य तस्मिन् तादृशे सति, किमपि किञ्चन, तमिस्रं तमः अन्धकारः इति यावत्, आविरभूत् उदभवत् । (तथाहि) ; मलीमसः मलिनः पङ्किलः पापः पुरुषः इत्यर्थः, रन्ध्रं छिद्रं, आसाद्य प्राप्य, महनीयधाम्नां महनीय धाम येषां तेषां श्लाघनीयतेजसां, संपदं श्रियं, आतनोति अपहरति इत्यर्थः । यद्वा मलीमसः महनीयधाम्नां, रन्ध्रं, आसाद्य, संपदं, आतनोति विस्तृणाति उपचिनोति इति यावत ॥ उपजातिः वृत्तम् ॥ ३ ॥

निद्रां विमुञ्चत्सु सरोरुहेषु
सौरभ्यलोलैर्निवहैरलीनाम् ।
स्तोकावशेषोऽपि बभूव सान्द्रः
पद्माकरेषु क्षणमन्धकारः ॥ ४ ॥

**निद्रां इति** ॥ सरोरुहेषु पङ्कजेषु, निद्रां स्वापं मुकुलीभावं इत्यर्थः, विमुञ्चत्सु विसृजत्सु सत्सु विकसत्सु सत्सु इत्यर्थः, सौरभ्यलोलैः सौरभ्ये कमलपरिमले लोलैः आसक्तैः, अलीनां भ्रमराणां, निवहैः समूहैः (हेतुभिः), पद्माकरेषु कमलिनीषु, स्तोकावशेषः किञ्चिदवशिष्टः अपि, अन्धकारः तमः, क्षणं क्षणकालं, सान्द्रः निबिडः घनीभूतः इति यावत्, बभूव ॥ इन्द्रवज्रा वृत्तम् ॥ ४ ॥

संस्पृश्यमानैव बलाज्जहार
वसूनि सर्वाण्यपि पश्चिमाशा ।
इन्दोः प्रकृत्या विमलस्य जात-
स्तथापि तस्यामनुरागबन्धः ॥ ५ ॥

**संस्पृश्यमाना इति** ॥ पश्चिमाशा प्रतीची दिक् ( काचित् स्त्री च व्यज्यते), संस्पृश्यमाना एव तेन संस्पृष्टमात्रा एव (न तु तदनुभूतालिङ्गनचुम्बनादिसुरतसुखा इति ध्वन्यते ), प्रकृत्या स्वभावेन, विमलस्य निर्मलस्य परिशुद्धस्य इति यावत् , इन्दोः चन्द्रस्य ( कस्य चित् पुंसः इति च व्यज्यते ), सर्वाणि अशेषाणि अपि, वसूनि किरणान् (धनानि च ) (' रश्मौ च वसु तोये धने मणौ ' इति वैजयन्ती), बलात् प्रसभं बलात्कारेण इति यावत् , जहार हृतवती। तथा सति अपि, (तस्य), तस्यां पश्चिमाशायां, अनुरागबन्धः प्रेमबन्धः रक्तवर्णसंबन्धः च, जातः अभवत् ॥ अस्मिन् सर्गे प्रायः **उपजातिः** वृत्तम् ॥ ५ ॥

दिशं प्रतीचीं परिरभ्य चन्द्रे
दरीगृहं गच्छति पश्चिमाद्रेः ।
बभार बालारुणरश्मिशोणं
प्राची मुखं कोपकषायितेव ॥ ६ ॥

**दिशं इति** ॥ चन्द्रे इन्दौ, प्रतीचीं पश्चिमां, दिशं ककुभं, परिरभ्य संश्लिष्य, पश्चिमाद्रेः अस्ताचलस्य, दरीगृहं गुहामन्दिरं, गच्छति याति सति, प्राची पूर्वा दिक् , कोपकषायिता इव कोपेन स्वसपत्नीसंभोगजनितेन क्रोधेन कषायिता इव कलुषिता इव, बालारुणरश्मिशोणं बालारुणः बालसूर्यः तस्य रश्मिभिः किरणैः शोणं रक्तवर्णं, मुखं पुरोभागं ( वदनं च ), बभार दधौ ॥ ६ ॥

सरारु
नातिप्रसुप्तेषु च कैरवेषु ।
कराम्बितं सौरभमाददानः
प्रालेयशीतः पवनश्चचार ॥ ७ ॥

**अर्धेति** ॥ सरोरुहेषु पद्मेषु, अर्धप्रबुद्धेषु किञ्चित् विकसितेषु सत्सु,

कैरवेषु कुमुदेषु च, नातिप्रसुप्तेषु नातिसंकुचितेषु सत्सु, करंबितं मिश्रत, सौरभ परिमलं, आददानः बिभ्रत्, प्रालेयशीतः प्रालेयैः हिमैः शीतः शीतलस्पर्शः, पवनः वायुः, चचार ववौ ॥ ७ ॥

**तथाविधां तस्य दशां नृपस्य**
**निरीक्षितुं कातरतामुपेत्य ।**
**निद्राविरामध्वनिभिः खगाना-**
**माहूय चन्द्रं रजनी जगाम ॥ ८ ॥**

**तथाविधां इति** ॥ रजनी रात्रिः, तस्य, नृपस्य नलमहाराजस्य, तथाविधां तादृकप्रकारां दुर्निरीक्ष्यां इत्यर्थः, दशां अवस्थां, निरीक्षितु अवलोकयितुं, कातरतां आकुलत्व, उपेत्य प्राप्य इव, खगानां पक्षिणां, निद्राविरामध्वनिभिः निद्राविरामे निद्रापगमे कृताः ये ध्वनयः शब्दाः तैः पक्षिणां निद्रावसानोद्भूतध्वनिव्याजेन इत्यर्थः, चन्द्र इन्दु, आहूय आकार्य, जगाम गतवती ॥ ८ ॥

**पूर्वापराद्र्योः शिखराग्रभाजौ**
**द्वावेव माणिक्यमणिप्रकाशौ ।**
**परस्परस्य प्रतिबिम्बलक्ष्मीं**
**क्षणं प्रपन्नाविव पुष्पवन्तौ ॥ ९ ॥**

**पूर्वेति** ॥ पूर्वापराद्र्योः पूर्वाद्रिः उदयाचलः अपराद्रिः अस्ताचलः च तयोः, शिखराग्र शृङ्गोर्ध्वभागं भजतः इति शिखराग्रभाजौ शृङ्गाग्रस्थौ, माणिक्यमणिप्रकाशौ माणिक्यमणेः पद्मरागमणेः प्रकाश इव प्रकाशः ययोः तौ तादृशौ, पुष्पवन्तौ सूर्यचन्द्रौ ' एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ' इति अमरः, द्वौ एव उभौ एव, क्षण क्षणकालं, परस्परस्य अन्योन्यस्य, प्रतिबिम्बलक्ष्मी प्रतिफलशोभां, प्रपन्नौ इव प्राप्तौ इव, ( अलक्ष्येताम् ) ॥ ९ ॥

**सुतैरिव स्वैरुडुभिः सहैव**
**नभोङ्गणे यामवतीमतीत्य ।**
**विहर्तुकामश्चरमाद्रिवेलां**
**शनैः प्रपेदे तुहिनांशुहंसः ॥ १० ॥**

**सुतैः इति** ॥ तुहिनांशुहंसः तुहिनांशुः चन्द्रः एव हंसः मरालः, स्वैः निजैः, सुतैः इव पुत्रैः इव हंसशिशुभिः इव स्थितैः इत्यर्थः, उडुभिः सह एव नक्षत्रैः सार्धं एव, नभोङ्गणे गगनाङ्गणे, यामवतीं यामिनीं रजनीं इति यावत्, अतीत्य अतिक्रम्य, विहर्तुकामः क्रीडितुमनाः सन्, चरमाद्रिवेलां अस्ताचलतटं अस्ताचलसमीपस्थपश्चिमसमुद्रतीरं वा, शनैः क्रमेण, प्रपेदे प्राप ॥ **उपेन्द्रवज्रा** वृत्तम् ॥ १० ॥

**विशीर्णताराकुसुमोत्करश्री-**
**ज्योत्स्नाविपाण्डुच्छदनान्यपास्य ।**
**बभार बालारुणरश्मिदम्भा-**
**न्नभस्तरुर्नूतनपल्लवानि ॥ ११ ॥**

**विशीर्णेति** ॥ ताराः नक्षत्राणि एव कुसुमानि पुष्पाणि तेषां उत्करः निचयः समूहः इति यावत् तेषां श्रीः शोभा विशीर्णा विलुप्ता ताराकुसुमोत्करश्रीः यस्य सः (नवकिसलयोद्भेदकाले वृक्षाः विशीर्णपुष्पाणि भवन्ति ; प्रभातसमये आकाशश्च विलुप्ततारागणः भवति इति अनुभवसिद्धं) तादृशः, नभस्तरुः नभः आकाशः एव तरुः वृक्षः, ज्योत्स्नाविपाण्डुच्छदनानि ज्योत्स्ना चन्द्रिका एव विपाण्डूनि शुष्कत्वात पाण्डुवर्णानि छदनानि पर्णानि तानि, अपास्य अपोह्य, बालारुणरश्मिदंभात् बालारुणः बालसूर्यः तस्य रश्मयः किरणाः तेषां दंभात् व्याजात् प्रभातसूर्यकिरणमिषेण इत्यर्थः, नूतनपल्लवानि नवकिसलयानि, बभार बिभर्ति स्म ॥ ११ ॥

**उपैष्यतश्चण्डरुचेर्मयूखै-**
**र्निरस्यमानेऽपि घनान्धकारे ।**
**नलस्य भैमीविरहाग्निजन्मा**
**जगाम वृद्धिं मदनान्धकारः ॥ १२ ॥**

**उपैष्यतः इति** ॥ उपैष्यतः उपगमिष्यतः गगनमध्यं आरुरुक्षोः इत्यर्थः, चण्डरुचेः उष्णरश्मेः सूर्यस्य इति यावत्, मयूखैः किरणैः, घनान्धकारे सान्द्रतमसि, निरस्यमाने तिरस्क्रियमाणे सत्यपि, नलस्य, भैमीविरहाग्निजन्मा भैम्याः दमयन्त्याः यः विरहाग्निः वियोगानलः तस्मात् जन्म

उत्पत्तिः यस्य सः तादृशः, मदनान्धकारः मन्मथकृतमोहरूपं तमः, वृद्धिं उपचयं सान्द्रत्वं इति यावत्, जगाम प्राप ॥ उपेन्द्रवज्रा वृत्तम् ॥ १२ ॥

विकासलक्ष्मीः कमलं जगाम
सङ्कोचमुद्रा कुमुदं प्रपेदे ।
संपद्विपद्वापि निसर्गलोला
कुत्रापि न स्थैर्यमुरीकरोति ॥ १३ ॥

विकासेति ॥ विकासलक्ष्मीः विकसनश्रीः, कमलं पद्मं, जगाम प्राप । सङ्कोचमुद्रा निमीलनरूपमुद्रणं, कुमुदं कैरवं प्रपेदे प्राप । निसर्गलोला निसर्गेण स्वभावेन लोला चपला, सम्पत् समृद्धिः, विपद्वापि आपद्वापि, कुत्रापि क्वचिदपि, स्थैर्यं स्थिरत्वं, न उरीकरोति न भजते ॥ १३ ॥

मधूनि पीत्वा क्षणदामिदानी-
मदक्षिणोऽयं नलिनीमुपैति ।
इतीव सेर्ष्या निजकोषमध्ये
कुमुद्वती कापि बबन्ध भृङ्गम् ॥ १४ ॥

मधूनि इति ॥ 'अय एष भृङ्गः (विटश्च गम्यते), क्षणदां सर्वां रात्रिं इत्यर्थः ('कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया), मधूनि मम मकरन्दान् पुष्परसानिति यावत् (अधरमधूनि इति च गम्यते), पीत्वा आस्वाद्य, इदानीं अस्मिन् प्रभातसमये इत्यर्थः, अदक्षिणः मयि प्रीतिरहितस्सन्, नलिनीं कमलिनीं (अन्यां युवतिं इति च गम्यते), उपैति उपगच्छति ।' इति एव, (मत्वा), सेर्ष्या ईर्ष्यया सहिता सासूया इव, कापि काचन, कुमुद्वती कैरविणी कुमुदिनी इति यावत् (काचित् युवती इति च गम्यते), निजकोषमध्ये स्वकुड्मलाभ्यन्तरे (निजकुचकुड्मलमध्ये इति च गम्यते), भृङ्गं भ्रमरं (विटं युवानं इति च गम्यते), बबन्ध बध्नाति स्म ॥ उपेन्द्रवज्रा वृत्तम् १४ ॥

कथञ्चिदास्थाय स धैर्यबन्धं
प्रत्यूषसन्ध्याविधिमन्वतिष्ठत् ।
महात्मनां हि व्यसनातिभारः
क्रियाविलोपे प्रभुतां न याति ॥ १५ ॥

**कथञ्चित् इति** ॥ सः नलः, कथञ्चित् कृच्छ्रात् महता प्रयासेन इत्यर्थः, धैर्यबन्धं धीरत्वं, आस्थाय अवलम्ब्य, प्रत्यूषसन्ध्याविधिं प्रत्यूषे प्रातःकाले यः सन्ध्याविधिः सन्ध्यावन्दनरूपं अनुष्ठानं तं, अन्वतिष्ठत् अकरोत्। तथाहि। महात्मनां महानुभावानां. व्यसनातिभारः व्यसनस्य दुःखस्य अतिभारः प्रकर्षः अतिरेकः इति यावत्, क्रियाविलोपे सन्ध्यावन्दनाद्यवश्यकर्तव्यविघाते, प्रभुतां समर्थतां, न याति न आप्नोति ॥ १५ ॥

**दशां तवेमां विनिवेद्य भैमी-**
**माश्वासयिष्यामि निकामखिन्नाम्।**
**श्रुतोऽपि खेदं शिथिलीकरोति**
**प्रियानुरागः प्रमदाजनस्य ॥ १६ ॥**

**दशामिति** ॥ तव भवतः, इमां ईदृशीं, दशां अवस्थां, विनिवेद्य कथयित्वा. निकामखिन्नां निकाम नितान्तं खिन्नां व्यथितां त्वद्विरहातुरां इत्यर्थः, भैमीं भीमराजसुतां दमयन्तीं, आश्वासयिष्यामि सान्त्वयिष्यामि। (यतः), प्रियानुरागः प्रियस्य दयितस्य अनुरागः प्रेम, श्रुतः अपि आकर्णितमात्रः सन् अपि, प्रमदाजनस्य युवतीनां इत्यर्थः, खेदं मनोव्यथां, शिथिलीकरोति अपनोदयति ॥ १६ ॥

**तदेष गच्छामि नराधिनाथ**
**मुहूर्तमात्रेण पुरीं विदर्भाम्।**
**विलोकयिष्यामि दिनैः कियद्भि-**
**र्भैमीसनाथस्य मुखाम्बुजं ते ॥ १७ ॥**

**तदिति** ॥ नराधिनाथ हे नलभूपते, तत् तस्मात् कारणात्, एषः अयं अहं, मुहूर्तमात्रेण क्षणमात्रेण घटिकाद्वयमात्रेण वा, विदर्भां विदर्भाख्यां, पुरीं नगरीं प्रति, गच्छामि यामि। (तथा), कियद्भिः कतिपयैः अतिस्वल्पैः एव इत्यर्थः, दिनैः दिवसैः, भैमीसनाथस्य भैम्या दमयन्त्या सनाथस्य सहितस्य, ते तव, मुखाम्बुजं वदनारविन्दं, विलोकयिष्यामि प्रेक्षिष्ये ॥ १७ ॥

**इति ब्रुवन्नेव नरेश्वरेण**
**दोर्भ्यां परिष्वज्य खगो विमुक्तः।**

लिम्पन्नभः काञ्चनपक्षकान्त्या
क्षिप्रं विदर्भाभिमुखो जगाम ॥ १८ ॥

इतीति ॥ इति पूर्वोक्तप्रकारेण, ब्रुवन् वदन् एव, नरेश्वरेण नलमहाराजेन, दोर्भ्यां बाहुभ्यां, परिष्वज्य आलिङ्ग्य, मुक्तः विसृष्टः, खगः हंसपक्षी, काञ्चनपक्षकान्त्या काञ्चनमययोः पक्षयोः गरुतोः कान्त्या तेजसा, नभः आकाशं, लिम्पन् व्याप्तं कुर्वन् सन् इत्यर्थः, क्षिप्रं द्रुतं, विदर्भाभिमुखः विदर्भपुरीं उद्दिश्य इत्यर्थः, जगाम ययौ ॥ १८ ॥

अत्रान्तरे दूतमुखेन भीमः
स्वयंवरार्थं स्वतनूभवायाः ।
प्राप्ते विदर्भामवनीन्द्रवृन्दे
तं प्रीतिपूर्वं नलमाजुहाव ॥ १९ ॥

अत्रान्तरे इति ॥ अत्रान्तरे एतन्मध्ये, स्वतनूभवायाः निजसुतायाः दमयन्त्याः, स्वयंवरार्थं स्वेच्छया पतिवरणार्थं, अवनीन्द्रवृन्दे अवनीन्द्राणां महीपतीनां वृन्दे समूहे, विदर्भां विदर्भाख्यपुरीं, प्राप्ते आगते सति, भीमः तदाख्यः विदर्भाधिपतिः, दूतमुखेन दूतस्य वार्ताहरस्य मुखेन द्वारा इत्यर्थः, तं प्रसिद्धं, नलं, प्रीतिपूर्वं प्रीतिपुरस्सरं सस्नेहं यथा तथा इति यावत्, आजुहाव आहूतवान् ॥ १९ ॥

ततः समासाद्य शुभं मुहूर्तं
पुरोधसा संभृतमङ्गलश्रीः ।
निमित्तसंसूचितकार्यसिद्धि-
र्नलः प्रतस्थे नगरीं विदर्भाम् ॥ २० ॥

ततः इति ॥ ततः भीमाह्वानसमनन्तरं, नलः, शुभं अतिप्रशस्तं शुभावहं वा, मुहूर्तं लग्नं, समासाद्य प्राप्य, पुरोधसा पुरोहितेन, संभृतमङ्गलश्रीः संभृता विरचिता मङ्गलश्रीः कल्याणसमृद्धिः यस्मै सः तादृशः सन्, निमित्तैः शुभशकुनैः संसूचिता आवेदिता कार्यसिद्धिः दमयन्तीप्राप्तिरूपकार्यस्य साफल्यं यस्य सः तादृशः सन्, विदर्भां, नगरीं पुरीं, प्रतस्थे प्रस्थितवान् ॥ उपेन्द्रवज्रा वृत्तम् ॥ २० ॥

अधश्चमूरेणुभरस्य रेजे

श्वेतातपत्रं निषधेश्वरस्य ।

विलङ्घ्य मेघान्निजवंशकेतुं

तं वीक्षितुं प्राप्त इवामृतांशुः ॥ २१ ॥

अधः इति ॥ चमूरेणुभरस्य चम्वाः सेनायाः ये रेणवः धूलयः तेषां भरः पटलं तस्य सेनोत्थितधूलीपटलस्य इति यावत्, अधः अधोभागे, (धृतं), निषधेश्वरस्य नलमहाराजस्य, श्वेतातपत्रं श्वेतं धवलं आतपत्रं छत्रं (कर्तृ), मेघान् जलदान्, विलङ्घ्य अतिक्रम्य, निजवंशकेतुं निजस्य स्वस्य वंशस्य चन्द्रकुलस्य इत्यर्थः केतुः ध्वजः तद्वत् व्यावर्तकः इत्यर्थः तं, तं नलं, वीक्षितुं अवलोकयितुं, प्राप्तः उपागतः, अमृतांशुः इव चन्द्रः इव, रेजे बभौ ॥ २१ ॥

अमुष्य हस्ताम्बुजमभ्युपेत्य

भैमी ध्रुवं मे भविता सपत्नी ।

इतीव तस्य ध्वजिनीभरेण

विश्वंभरा वेपथुमुद्बभार ॥ २२ ॥

अमुष्येति ॥ 'भैमी दमयन्ती, अमुष्य अस्य नलस्य, हस्ताम्बुजं करकमलं, अभ्युपेत्य आसाद्य, मे मम (विश्वंभरायाः इत्यर्थः), समानः पतिः यस्याः सा सपत्नी, ध्रुवं नूनं, भविता भविष्यति' । इति इव इत्थं मत्वा इव, विश्वंभरा पृथ्वी, तस्य नलस्य, ध्वजिनीभरेण ध्वजिन्याः सेनायाः भरेण भारेण, वेपथुं कम्पं, उद्बभार प्राप्नोति स्म ॥ २२ ॥

मद्वंशजातान्नृपतीनतीत्य

गुणेन भैमीमुपलप्स्यतेऽसौ ।

इतीव लज्जाविधुरो विवस्वा-

नन्तर्दधे तस्य चमूरजोभिः ॥ २३ ॥

मदिति ॥ असौ एषः नलः, गुणेन सौन्दर्यसौशील्यधैर्यवीर्यादिसद्गुणनिवहैः इत्यर्थः, मद्वंशजातान् मम वंशः सूर्यकुलं इत्यर्थः तस्मिन् जाताः उत्पन्नाः तान् तादृशान्, अतीत्य अतिशय्य, भैमीं भीमसुतां दमयन्तीं, उपलप्स्यत

प्राप्स्यति ।' इति एवं, (मत्वा), विवस्वान् सूर्यः, लज्जाविधुरः इव लज्जया त्रपया विधुरः विह्वलः इव, तस्य नलस्य, चमूरजोभिः चम्वाः सेनायाः रजोभिः धूलिभिः, अन्तर्दधे तिरोहितः बभूव ॥ २३ ॥

**मतङ्गजानां मदवारिसेकैः**
**पराभवासादनशङ्कयेव ।**
**अमुष्य नासीरतटे तुरङ्गैः**
**क्षुण्णं रजः खं सहसोत्पपात ॥ २४ ॥**

**मतङ्गजानामिति** ॥ अमुष्य अस्य नलस्य, नासीरतटे नासीरस्य सेनाग्रभागस्य तटे प्रान्ते, (स्थितैः), तुरङ्गैः अश्वैः, क्षुण्ण चूर्णितं, रज. पांसुपटल इत्यर्थः, मतङ्गजानां गजानां, मदवारिसेकैः मदवारीणां मदजलानां सेकैः स्रावैः, पराभवासादनशङ्कया इव पराभवस्य अभिभवस्य आसादन प्राप्तिः तस्मात् शङ्का भयं तया इव तिरस्कारप्राप्तिभयेन इव इत्यर्थः, सहसा आशु, खं आकाश, उत्पपात उदगच्छत् ॥ २४ ॥

**आभोगलक्ष्म्या पदवीष्वमान्ती**
**विसृत्वरी विष्वगमुष्य सेना ।**
**वर्षाम्बुपूरेण विभिन्नसेतुः**
**स्रोतस्वती वृद्धिमतीव रेजे ॥ २५ ॥**

**आभोगेति** ॥ आभोगलक्ष्म्या आभोगस्य विस्तारस्य वैपुल्यस्य इति यावत् लक्ष्म्या समृद्ध्या हेतुना, पदवीषु मार्गेषु, अमान्ती अवकाश अलभमाना इत्यर्थः. (अतः एव). विष्वक सर्वतः, विसृत्वरी विसर्पणशीला व्यापनशीला इति यावत् , अमुष्य एतस्य नलस्य, सेना चमूः, वर्षाम्बुपूरेण वर्षाम्बूनां वर्षासु वर्षाकाले विद्यमान यः अम्बुपूरः जलप्रवाहः तेन (यद्वा वर्षाम्बूनां वृष्टिजलानां पूरेण समृद्ध्या), वृद्धिमती वृद्धि प्राप्ता. (अतः एव), विभिन्नसेतुः विभिन्नः निर्भिन्नः भग्नः इति यावत् सेतुः धरण जलावरण इति यावत् यस्याः सा तादृशी, स्रोतस्वती स्रोतोवहा इव नदी इव इति यावत् , रेजे बभौ ॥२५॥

**तस्य प्रयातुः पृतनाभरेण**
**नीरन्ध्रतां वर्त्म तथा जगाम ।**

यथा रजोऽप्यश्वखुरावकीर्णं
न चक्षमे व्योमविलङ्घनाय ॥ २६ ॥

**तस्येति** ॥ प्रयातुः प्रयाणं कुर्वतः, तस्य नलस्य, पृतनाभरेण पृतनायाः सेनायाः भरः आधिक्यं तेन, वर्त्म मार्गः, तथा तेन प्रकारेण, नीरन्ध्रतां निबिडत्वं अविरलत्वं इति यावत्, जगाम प्राप; यथा येन प्रकारेण, अश्वखुरावकीर्णं अश्वानां तुरगाणां खुरैः शफैः अवकीर्णं उद्धृतं, रजः अपि रेणुः अपि, व्योमविलङ्घनाय व्योम्नः आकाशस्य विलङ्घनं आक्रमणं तस्मै आकाशं गन्तुं इत्यर्थः, न चक्षमे समर्थं न अभूत् ॥ २६ ॥

दृशः पुरा निन्दति नः क्षितीन्दु-
र्नेत्रश्रियं वीक्ष्य विदर्भजायाः ।
इतीव सञ्चिन्त्य ययुर्विदूरं
मृग्योऽध्वकुञ्जेषु सुखं निषण्णाः ॥ २७ ॥

**दृशः इति** ॥ 'क्षितीन्दुः भूचन्द्रः नलः इत्यर्थः, विदर्भजायाः वैदर्भ्याः दमयन्त्याः इति यावत्, नेत्रश्रियं नयनसौन्दर्यं, वीक्ष्य अवलोक्य, नः अस्माकं (मृगीणां इत्यर्थः), दृशः नयनानि, पुरा निन्दति निन्दिष्यति' ('यावत्पुरानिपातयोर्लट्' इति पुरायोगेन लृडर्थे लट्) इति इत्थं, सञ्चिन्त्य इव मत्वा इव, अध्वकुञ्जेषु अध्वनि मार्गे स्थिताः ये कुञ्जाः निकुञ्जाः लतागुल्मानि इति यावत् तेषु, सुखं सुखेन विस्रब्धं यथा तथा इत्यर्थः, निषण्णाः उपविष्टाः, मृग्यः मृगाङ्गनाः हरिण्यः इति यावत्, विदूरं अतिदूरं, ययुः अगच्छन् ॥ २७ ॥

उपायनान्यस्य तथोपनिन्ये
पदे पदे जानपदो जनौघः ।
कृतोपयोगान्यपि तानि सैन्यै-
र्यथा न सङ्ख्याविषयत्वमीयुः ॥ २८ ॥

**उपायनानि इति** ॥ जनपदे भवः जानपदः जनपदनिवासी इत्यर्थः, जनौघः जनसमूहः, पदे पदे प्रतिपदं तत्तत्स्थानेषु इत्यर्थः, अस्य अमुष्य नलस्य नलाय इत्यर्थः, उपायनानि उपहारान्, तथा तेन प्रकारेण, उपनिन्ये

आजहार ददौ इत्यर्थः; यथा येन प्रकारेण, सैन्यैः अनीकैः, कृतः उपयोगः येषां तानि कृतोपयोगानि अपि यथेष्टं विनियुक्तानि अपि, तानि उपायनानि, संख्याविषयत्वं गणनागोचरत्वं संख्येयतां इत्यर्थः, न ईयुः न जग्मुः असंख्येयानि एव आसन् इत्यर्थः, ॥ २८ ॥

मार्गेष्वखिन्नोऽपि चमूचराणां
विश्रामहेतोर्वसतीः स भेजे ।
तथाविधानां चरितं न जातु
श्रमातिरेकाय समाश्रितानाम् ॥ २९ ॥

**मार्गेषु इति** ॥ सः नलः, मार्गेषु पथिषु, अखिन्नः अपि अश्रान्तः सन् अपि, चमूचराणां सैनिकानां, विश्रामहेतोः विश्रान्त्यर्थं श्रमापनोदनिमित्तं इत्यर्थः, वसतीः सेनानिवेशनानि सेनावस्थितीः इति यावत्, भेजे निषेवते स्म । (यतः), तथाविधानां तादृशानां नलसदृशानां महात्मनां, चरितं चेष्टितं आचरणं वा, समाश्रितानां स्वानुजीविनां, श्रमातिरेकाय श्रमबाहुल्याय अत्यन्तश्रमाय इत्यर्थः, जातु कदाचिदपि, न ( भवति ) ॥ २९ ॥

जवादविज्ञातविलङ्घिताध्वा
सञ्चिन्तयन्नेव गुणान्प्रियायाः ।
विदर्भराजस्य पुरोपकण्ठे
बबन्ध सेनाशिबिरं नरेन्द्रः ॥ ३० ॥

**जवात् इति** ॥ नरेन्द्रः नलभूपतिः, प्रियायाः दयितायाः दमयन्त्याः, गुणान् सौन्दर्यादीन्, सञ्चिन्तयन् एव भावयन् एव, (अतः एव), जवात् वेगात्, अविज्ञातविलङ्घिताध्वा अविज्ञातं अगणितं यथा तथा विलङ्घितः अतिक्रान्तः अध्वा मार्गः येन सः तथाभूतः सन्, विदर्भराजस्य विदर्भाधिपतेः भीमराजस्य इत्यर्थः, पुरोपकण्ठे पुरस्य नगरस्य उपकण्ठे समीपे, सेनाशिबिरं सेनानिवेशं, बबन्ध कल्पयामास ॥ ३० ॥

अत्रान्तरे क्षोणितलादुपेत्य
कलिप्रियः कामचरो महर्षिः ।

निवेदयामास विदर्भजायाः
स्वयंवरस्यावसरं सुरेभ्यः ॥ ३१ ॥

**अत्रान्तरे इति** ॥ अत्रान्तरे अस्मिन् अवसरे, कामेन चरति इति कामचरः स्वच्छन्दसञ्चारी, कलिप्रियः कलौ कलहे प्रियः प्रीतिमान्, महर्षिः नारदमहामुनिः इत्यर्थः, क्षोणितलात्, महीतलात् उपेत्य (स्वर्गलोकं) आसाद्य, सुरेभ्यः इन्द्रादिदेवेभ्यः, विदर्भजायाः भैम्याः दमयन्त्याः इत्यर्थः, स्वयंवरस्य, अवसरं समयं, निवेदयामास कथयामास ॥ ३१ ॥

प्रागेव तस्यामनुबद्धभावाः
पुरन्दराद्याः ककुभामधीशाः ।
पुरःसरीकृत्य मुनिं तमेव
प्रतिस्थिरे तां नगरीं विदर्भाम् ॥ ३२ ॥

**प्रागिति** ॥ प्राक् एव पूर्वं एव, तस्यां दमयन्त्यां, अनुबद्धः भावः यैः ते अनुबद्धभावाः विहिताभिलाषाः, पुरन्दरः आद्यः येषां ते पुरन्दराद्याः इन्द्रादयः, ककुभां दिशां अधीशाः अधिपतयः दिक्पालकाः इत्यर्थः, तं, मुनिं एव नारदमहर्षिं एव, पुरस्सरीकृत्य अग्रेसरीकृत्य, तां, विदर्भां, नगरीं पुरीं (उद्दिश्य), प्रतस्थिरे प्रस्थितवन्तः ॥ ३२ ॥

लावण्यलक्ष्मीजितपञ्चबाणं
विलोक्य ते वर्त्मनि वैरसेनिम् ।
विदर्भजायां शिथिलीकृताशाः
परस्परं मन्त्रमिमं वितेनुः ॥ ३३ ॥

**लावण्येति** ॥ ते इन्द्रादिदिक्पालाः, वर्त्मनि मार्गे, लावण्यस्य सौन्दर्यस्य लक्ष्म्या समृद्ध्या जितः अतिशयितः इत्यर्थः पञ्चबाणः मन्मथः येन तं तादृशं, वीरसेनस्य अपत्यं पुमान् वैरसेनिः तं वीरसेनमहाराजतनयं नलं इत्यर्थः, विलोक्य दृष्ट्वा, विदर्भजायां दमयन्त्यां विषये, शिथिलीकृताशाः शिथिलीकृता भग्ना आशा दमयन्तीप्राप्तिमनोरथः येषां ते तादृशाः सन्तः, परस्परं अन्योन्यं, इमं वक्ष्यमाणं, मन्त्रं आलोचनां, वितेनुः चक्रुः ॥ ३३ ॥

उज्जृम्भते चेतसि तावदेव
यूनां मदः कान्तिविशेषजन्मा।
न यावदक्ष्णोर्विषयत्वमेति
विश्वंभरालङ्कृतिरेष वीरः ॥ ३४ ॥

**उज्जृंभते इति** ॥ यावत् यावत्कालपर्यन्तं, विश्वंभरालंकृतिः विश्वंभरायाः वसुधायाः अलंकृतिः अलंकारभूतः, वीरः शूरः, एषः अयं नलः, अक्ष्णोः नयनयोः, विषयत्वं गोचरत्वं, न एति न प्राप्नोति यावत् नलः न प्रत्यक्षीक्रियते इत्यर्थः ; तावत् एव तावत्कालपर्यन्तं एव, यूनां युवपुरुषाणां, चेतसि चित्ते, कान्तिविशेषजन्मा कान्तिविशेषात् शोभाप्रकर्षात् जन्म उत्पत्तिः यस्य सः तादृशः सौन्दर्यातिशयजनितः इत्यर्थः, मदः गर्वः, उज्जृम्भते वर्धते ॥ ३४ ॥

अस्माभिरेतैरविमृश्य नून-
मङ्गीकृतः साहसिकत्वदोषः।
मोहादनादृत्य नरेन्द्रमेनं
भैमीविलोलं यदकारि चेतः ॥ ३५ ॥

**अस्माभिः इति** ॥ यत यस्मात् कारणात्, मोहात् अज्ञानात्, एनं अमु नरेन्द्रं नलमहाराज, अनादृत्य उपेक्ष्य, चेतः (अस्माकं) मनः, भैमीविलोलं भैम्यां दमयन्त्यां विलोलं सतृष्णं साभिलाष इत्यर्थः, अकारि क्रियते स्म ; (तत तस्मात् कारणात्), एतैः इदानीं एतत्कार्यव्यापृतैः इत्यर्थः, अस्माभिः, अविमृश्य अपर्यालोच्य, साहसिकत्वदोषः साहसे प्रसृतः साहसिकः तस्य भावः साहसिकत्व असमीक्ष्यकारित्वं इत्यर्थः तद्रूपः दोषः प्रमादः स्खलितं वा, नूनं ध्रुव, अङ्गीकृतः प्राप्तः, (आसीत्) ॥ ३५ ॥

अभ्यर्थनाभङ्गपराभवेण
नवावतारेण विलज्जमानान्।
प्रतिप्रयातानवाप्य भैमीं
वक्ष्यन्ति किं किं सुरसुभ्रुवो नः ॥ ३६ ॥

**अभ्यर्थनेति** ॥ नवावतारेण नवः नूतनः अपूर्वः इति यावत् अवतारः उद्भवः यस्य तेन अभिनवोद्भूतेन इत्यर्थः, अभ्यर्थनायाः दमयन्तीविषयकास्म-

त्प्रार्थनायाः यः भङ्गः विच्छेदः तेन जातः यः पराभवः परिभवः अपमानः इति यावत् तेन दमयन्तीप्रार्थनाभङ्गजनितावमानेन इत्यर्थः, विलज्जमानान् संजातलज्जान् इत्यर्थः, भैमीं दमयन्तीं, अनवाप्य अलब्ध्वा, प्रतिप्रयातान् (स्वर्गं) प्रतिनिवृत्तान . नः अस्मान्, सुरसुभ्रुवः देवस्त्रियः, किं किं किं वा, वक्ष्यन्ति कथयिष्यन्ति ॥ ३६ ॥

**अस्माकमप्यत्र यदृच्छयैव**
**निपत्य दृष्टिर्यदि नान्यमेति ।**
**गुणातिरेकेऽभिनिवेशवत्यास्तदा**
**किमुच्येत विदर्भजायाः ॥ ३७ ॥**

**अस्माकं इति** ॥ अस्माकमपि दिव्यरूपसम्पन्नानां देवजातीनां अस्माकमपि, दृष्टिः नयनं, अत्र अस्मिन् नले, यदृच्छया एव अकस्मात् एव, निपत्य पतित्वा, अन्यं अतिसौन्दर्यशालिनं अपरं, न एति यदि न गच्छति चेत् न निरीक्षते यदि इत्यर्थः, तदा तर्हि, गुणातिरेके सौन्दर्यादिगुणोत्कर्षे, अभिनिवेशवत्याः अत्यन्तासक्तायाः, विदर्भजायाः दमयन्त्याः. (दृष्टिः, अत्र नले, निपत्य, अन्यं, न एति, इति), किं किमु, उच्येत कथ्येत किमु वक्तव्यं इत्यर्थः ॥३७॥

**अस्माभिरभ्यर्थ्य तदेष एव**
**दमस्वसुर्दूतपदे विधेयः ।**
**अस्मांस्तुवन्नेनमपास्य नून-**
**मन्यो हि लज्जाजडतामुपेयात् ॥ ३८ ॥**

**अस्माभिः इति** ॥ तत तस्मात् कारणात् , अस्माभिः, अभ्यर्थ्य प्रार्थ्य, एषः एव अयं नलः एव, दमस्वसुः दमाख्यस्य भीमतनयस्य भगिन्याः दमयन्त्याः इत्यर्थः, दूतपदे दूतस्य वार्ताहरस्य पदे स्थाने दूतकृत्ये इत्यर्थः, विधेयः नियोक्तव्यः । हि यस्मात् कारणात् , एनं इम नल. अपास्य विहाय इमं नलं विना इत्यर्थः, अन्यः दौत्ये नियुक्तः अपरः, अस्मान नलापेक्षया न्यूनगुणान् नः, स्तुवन् दमयन्तीसमक्षं प्रशंसन् सन् , लज्जाजडतां लज्जया हीनगुणवर्णनजनितह्रिया जडतां जडिमानं मूढतां इति यावत् , नूनं ध्रुवं, उपेयात् उपगच्छेत् ॥ ३८ ॥

इत्थं विनिश्चित्य दिवौकसस्ते
पृथक्पृथग्व्यञ्जितरूपचिह्नाः ।
आशीभिरानन्द्य मुहुः प्रणम्य
बद्धाञ्जलिं नैषधमित्यवोचन् ॥ ३९ ॥

**इत्थमिति** ॥ ते, दिवौकसः इन्द्रादयः देवाः, इत्थं अनेन प्रकारेण, विनिश्चित्य निर्णीय, पृथक् पृथक् प्रत्येकं प्रत्येकं, व्यञ्जितरूपचिह्नाः व्यञ्जितानि नलाय प्रकाशीकृतानि रूपाणि निजनिजवपूंषि चिह्नानि लक्ष्माणि च यैः ते तथाभूताः सन्तः, मुहुः पुनः पुनः, प्रणम्य इन्द्रादीन तान् देवान् नमस्कृत्य, बद्धाञ्जलिं बद्धः अञ्जलिः येन तं तादृशं कृताञ्जलिबन्ध इत्यर्थः, नैषधं निषधाधिपतिं नलं, मुहुः पुनः पुनः (काकाक्षिगोलकन्यायेन मुहुश्शब्दः उभयत्रापि अन्वेति), आशीर्भिः आशीर्वचनैः, आनन्द्य अभिनन्द्य सन्तोष्य वा, इति एवं वक्ष्यमाणप्रकारेण इत्यर्थः, अवोचन् अवदन् ॥ ३९ ॥

तथा प्रसन्नैरपि नांशुपूरै-
र्मालिन्यमिन्दुर्जगतां क्षिणोति ।
कुलावतंसत्वमुपेयुषस्ते
यथा विशुद्धैर्यशसां वितानैः ॥ ४० ॥

देवानां उक्तिप्रकारमेव आह—

**तथा इति** ॥ (हे नलभूपते), कुलावतंसत्वं कुलस्य निजवंशस्य चन्द्रवंशस्य इत्यर्थः अवतंसत्वं शेखरत्वं शिरोभूषणता इत्यर्थः, उपेयुषः उपजग्मुषः प्राप्तवतः इत्यर्थः, ते भवतः, विशुद्धैः अत्यन्तनिर्मलैः, यशसां कीर्तीनां, वितानैः समूहैः, इन्दुः चन्द्रः, यथा यादृक्, जगतां लोकानां, मालिन्यं मलीमसत्वं, क्षिणोति निरस्यति ; तथा तादृक्, प्रसन्नैः अपि अतिस्वच्छैः अपि, अंशुपूरैः अंशूनां स्वकिरणानां पूरैः ओघैः निजमयूखजालैः, (जगतां, मालिन्यं), न क्षिणोति न निरस्यति ॥ ४० ॥

आसाद्य पूर्वानपि पार्थिवांस्ते
न कश्चिदर्थी विमुखः प्रयातः ।

यशस्त्वसामान्यमिदं त्वदीयं
यदर्थिभावं वयमभ्युपेताः ॥ ४१ ॥

आसाद्य इति ॥ ( हे नल ), ते भवतः, पूर्वान् प्राग्भूतान् , पार्थिवान् अपि नृपान् अपि त्वत्पितृपितामहप्रपितामहादीन् अपि इत्यर्थः, आसाद्य उपगम्य, कश्चित् अर्थी कश्चिदपि याचकः, विमुखः पराङ्मुखः अलब्धमनोरथः इत्यर्थः न प्रयातः न निवृत्तः। (तथा सत्यपि) तव इदं त्वदीयं तावकीनं, इदं एतत् , यशः तु कीर्तिः पुनः, असामान्यं असाधारणं लोकोत्तरं अतिविलक्षणं वा इत्यर्थः । यत् यतः, वयं स्वतः संपूर्णकामाः अन्येषां प्रार्थितवरदानसमर्थाः सुरश्रेष्ठाः अपि वयं इत्यर्थः, (त्वयि), अर्थिभावं अर्थित्वं याचकत्वं इति यावत् , अभ्युपेताः प्राप्ताः (स्मः) ॥ ४१ ॥

कुलानुसारी सुरकार्यसिद्धौ
भवादृशानां भवति प्रयत्नः ।
तेनाद्य कुत्रापि समीहितेऽर्थे
नियोक्तुमिच्छन्ति दिवौकसस्त्वाम् ॥ ४२ ॥

कुलेति ॥ सुरकार्यसिद्धौ सुराणां देवानां यत् कार्यं कर्तव्यं तस्य सिद्धिः निष्पादनं तस्यां देवकार्यसंपादने विषये इत्यर्थः, भवादृशानां त्वादृशानां, प्रयत्नः व्यवसायः, कुलानुसारी वंशक्रमागतः, भवति । तेन तस्मात् कारणात् , अद्य संप्रात, दिवौकसः देवाः (वयमित्यर्थः), समीहिते समभिकांक्षिते, कुत्रापि क्वचित् कस्मिंश्चित् इति यावत् , अर्थे कार्ये. त्वां भवन्तं, नियोक्तुं प्रवर्तयितु, इच्छन्ति अभिलषन्ति ॥ ४२ ॥

भीमात्मजायाः सविधे तथा त्व-
मस्मानुपश्लोकय लोकवीर ।
अलङ्करोति त्रिदिवं यथेय-
मेकस्य नः कस्यचिदेत्य हस्तम् ॥ ४३ ॥

तदेव स्वसमीहितं कार्यं विवृण्वन्ति ।

भीमेति ॥ लोकवीर भुवनैकशूर हे नल, त्वं भवान् , भीमात्मजायाः

भीमसुतायाः दमयन्त्याः, सविधे निकटे, अस्मान् इन्द्रादीन् देवान् नः, तथा तेन प्रकारेण, उपश्लोकय उपवर्णय इत्यर्थः ; यथा येन प्रकारेण, इयं एषा दमयन्ती, नः अस्माकं मध्ये, कस्यचित् एकस्य यस्य कस्यापि इत्यर्थः, हस्त करं, एत्य प्राप्य, त्रिदिवं स्वर्गलोकं, अलङ्करोति भूषयेत् इत्यर्थः ॥ ४३ ॥

**तदर्थमर्थी विदितोऽसि वत्स**
**विस्रम्भभूमिस्तदपि त्वमेव ।**
**निजार्थसिद्धिष्वपि निर्व्यपेक्षाः**
**श्रेयः परेषां घटयन्ति सन्तः ॥ ४४ ॥**

**तदर्थ इति** ॥ वत्स तात नल, ( त्व ), सः च असौ अर्थः च तदर्थः त तदर्थं तमेव अर्थं दमयन्तीप्राप्तिरूपं प्रयोजन (यद्वा-तस्यै – तदर्थं दमयन्त्यर्थं एव) एव, अर्थी प्रार्थकः, विदितः अस्माभिः ज्ञातः, असि भवसि । तदपि तथापि इत्यर्थः, त्व एव भवान् एकः केवल, (नः), विस्रंभभूमिः (दमयन्तीसकाशे अस्मत्सन्देशहरणार्थे) विश्वासपात्र, (वर्तसे) । (कथं स्वतः दमयन्तीलिप्सोः मम दमयन्तीनिकटे वः सन्देशनयन इति नलाभिप्राय अनुमाय अर्थान्तरन्यासेन त समादधते ) सन्तः इति । सन्तः साधवः, निजार्थसिद्धिषु अपि स्वकार्यनिष्पादनेषु अपि, निर्व्यपेक्षाः निस्स्पृहाः विमुखाः सन्तः इति यावत , परेषां अन्येषा, श्रेयः हित, घटयन्ति सपादयन्ति ॥ ४४ ॥

**प्रतिश्रुतं चेद्भवता तदेव-**
**मसंशयं सेत्स्यति वाञ्छितं नः ।**
**संपाद्यमानं हि महानुभावैः**
**स्पृशन्ति न प्रार्थितमन्तरायाः ॥ ४५ ॥**

**प्रतिश्रुतमिति** ॥ एव तथैव ( अस्तु ) ; (इति ), भवता त्वया, प्रतिश्रुतं चेत् प्रतिज्ञातं यदि, तत् तर्हि तदा इति यावत्, नः अस्माकं, वाञ्छित अभीप्सितं, असंशयं निस्सन्देह यथा तथा, सेत्स्यति संपत्स्यते सिद्धिं प्राप्स्यति इत्यर्थः । हि यतः, महानुभावैः महात्मभिः उत्तमपुरुषैः इति यावत्, संपाद्यमानं साध्यमानं, प्रार्थितं अन्यैः अर्थित प्रयोजनं ( कर्म ), अन्तरायाः प्रत्यूहाः विघ्नाः इति यावत्, न स्पृशन्ति न परामृशन्ति न विघ्नन्ति इत्यर्थः ॥ ४५ ॥

विधेर्वशात्कार्यविपर्ययेऽपि
न तेऽपराधः परिशङ्कनीयः ।
प्रभुर्नियोगापनये नियोक्तु-
राशास्यसिद्धेः प्रतिभूर्न दूतः ॥ ४६ ॥

**विधेः इति** ॥ विधेः वशात् दैववशात विधिनियोगेन इत्यर्थः, कार्यविपर्यये कार्यस्य भवदङ्गीकृतदौत्यरूपकर्मणः विपर्यये हानौ सत्यपि, (तत्र), ते भवतः, अपराधः दोषः, न परिशङ्कनीयः न मन्तव्यः इत्यर्थः । (यतः), दूतः वार्ताहरः, नियोक्तुः नियोजकस्य प्रेरकस्य प्रभोः इति यावत्, नियोगापनये नियोगस्य निदेशस्य अपनये यथोक्ताचरणे विषये एव, प्रभुः शक्तः; (नियोक्तुः), आशास्यसिद्धेः आशास्यस्य अभीप्सितार्थस्य सिद्धेः निष्पत्तेः (विषये), प्रतिभूः लग्नकः प्रतिनिधिः वा, न (भवति) ॥ ४६ ॥

नलः सखेदोऽपि गिरं सुराणां
सत्त्वातिरेकाद्विदधे तथैव ।
अमुष्य यत्नेन विदर्भजा तु
सा निश्चयाद्वारयितुं न शेके ॥ ४७ ॥

**नलः इति** ॥ नलः, सखेदः अपि दमयन्त्यलाभविषये सव्यथः सन्नपि, सत्त्वातिरेकात् सतः भावः सत्त्वं महत्त्वं तस्य अतिरेकः उत्कर्षः तस्मात् हेतोः, सुराणां देवानां, गिर वचनं, तथैव यथोक्त एव, विदधे चकार । सा विदर्भजा तु वैदर्भी पुनः, अमुष्य एतस्य नलस्य, यत्नेन देवसन्देशाहरणरूपव्यापारेण, निश्चयात् नल एव भर्तारं लभेय इत्येवंरूपात् स्वदृढसंकल्पात्, वारयितुं निरोद्धुं, न शेके न शक्यते स्म शक्या न अभूत् इत्यर्थः ॥ ४७ ॥

सुरास्तु तां निश्चितचित्तवृत्तिं
विशुद्धवृत्तं निषधेश्वरं च ।
वरैरुभौ प्रत्यभिनन्द्य भूयो
दिवं ययुर्म्लानमुखप्रकाशाः ॥ ४८ ॥

सुराः इति ॥ सुराः तु इन्द्रादयः देवाः पुनः, निश्चितचित्तवृत्तिं निश्चिता निर्णीता स्थिरीकृता इत्यर्थः चित्तस्य मनसः वृत्तिः स्थितिः यस्याः तां तादृशी, तां दमयन्तीं, विशुद्धं परिशुद्धं वृत्तं चेष्टित यस्य तं विशुद्धवृत्तं अतिविमलचरितं, निषधेश्वरं नलं च, उभौ एतौ द्वौ अपि, वरैः अभीष्टवरप्रदानैः इत्यर्थः, प्रत्यभिनन्द्य सन्तोष्य, म्लानमुखप्रकाशाः म्लानः विवर्णीभूतः मुखस्य वदनस्य प्रकाशः कान्तिः येषां ते तथोक्ताः सन्तः दमयन्त्यलाभजनितलज्जया विवर्णवदनाः सन्तः इत्यर्थः, भूयः पुनरपि, दिव स्वर्गं, ययुः जग्मुः ॥ ४८ ॥

अथात्मजां नैषधसक्तचित्तां
निशम्य शश्वन्मुदितोऽपि भीमः ।
दाक्षिण्यमात्रेण नरेश्वराणां
स्वयंवरं वर्तयितुं शशास ॥ ४९ ॥

अथ इति ॥ अथ अनन्तरं, भीमः भीमराजः, आत्मजां स्वसुतां दमयन्तीं, नैषधसक्तचित्तां नैषधे नले सक्त अनुरक्तं चित्त मनः यस्याः ता तादृशीं नलानुरक्तहृदयां इति यावत्, निशम्य (स्वपत्नीसकाशात् दमयन्तीसखीसकाशात् वा ) आकर्ण्य, शश्वत् असकृत् , मुदितः अपि सन्तुष्टः सन्नपि, नरेश्वराणा स्वपुर आगतानां नृपतीनां, दाक्षिण्यमात्रेण चित्तानुवर्तनंनिमित्तेनैव केवल, स्वयंवर स्वयवररूपमहोत्सवं, वर्तयितु विधातु, शशास आदिदेश ॥४९॥

अतो नियुक्तैः प्रभुणा समन्ता-
दलङ्कृता सा नगरी विदर्भा ।
मरुद्विलोलैर्निवहैर्ध्वजानां
स्वयंवरायाह्वयतीव राज्ञः ॥ ५० ॥

अतः इति ॥ अतः एतदनन्तर, प्रभुणा राज्ञा भीमेन, नियुक्तैः आदिष्टैः जनैः, समन्तात् सर्वतः, अलङ्कृता परिष्कृता, सा, विदर्भा तदाख्या, नगरी पुरी, मरुद्विलोलैः मरुता वायुना विलोलैः कम्पितैः इत्यर्थः, ध्वजानां पताकानां, निवहैः समूहैः, स्वयंवराय स्वयंवराख्यौत्सवाय, राज्ञः नृपतीन् , आह्वयति इव आकारयते इव ॥ उपेन्द्रवज्रा वृत्तम् ॥ ५० ॥

अथानुकूलेऽहनि तत्र मञ्चा-
नास्थाय तस्थुः शतशः क्षितीशाः ।
अनुद्रुता बन्धुवधूजनेन
भैमी च तं देशमुपाजगाम ॥ ५१ ॥

अथेति ॥ अथ पुरालङ्करणानन्तरं, अनुकूले शुभावहे, अहनि दिवसे, क्षितीशाः भूपतयः, शतशः शतसङ्ख्यया बहुसङ्ख्यया इत्यर्थः, तत्र स्वयंवर-मण्डपे इत्यर्थः, मञ्चान् पर्यङ्कान् राजार्हासनानि वा, आस्थाय अधिरुह्य, तस्थुः निषीदन्ति स्म, भैमी च दमयन्ती अपि, बन्धुवधूजनेन बन्धुश्च असौ वधूजनश्च तेन स्वबन्धुभूतस्त्रीजनेन स्वसखीजनेन इत्यर्थः, अनुद्रुता अनुसृता सती, तं देश तदेव स्वयंवरस्थानं, उपाजगाम आससाद ॥ ५१ ॥

अभ्याशभाजोऽपि नृपानपास्य
सा नैषधे केवलमुत्सुकासीत् ।
ग्रहेषु सत्स्वप्यपरेषु नूनं
विलोकते चन्द्रमसं चकोरी ॥ ५२ ॥

अभ्याशेति ॥ सा दमयन्ती, अभ्याशं समीपं भजन्ति इति तान् अभ्याशभाजः स्वनिकटवर्तिनः अपि, नृपान् नृपतीन्, अपास्य विहाय उपेक्ष्य इति यावत्, नैषधे केवलं नले एव, उत्सुका आसक्ता, आसीत् अभूत् । तत्र दृष्टान्तं आह । चकोरी चकोरः जीवञ्जीवाख्यः पक्षिविशेषः चकोरस्य स्त्री चकोरी चकोराङ्गना, अपरेषु चन्द्रात् अन्येषु, ग्रहेषु सूर्यादिषु ज्योतिष्षु, सत्सु अपि स्थितेषु अपि, चन्द्रमसं इन्दुं एकं एव, नूनं ध्रुवं, विलोकते स्वजीवनहेतु-भूत निरीक्षते ॥ ५२ ॥

तामन्तिकाद्दूरतरं प्रयान्तीं
न केवलं दृष्टिरनुप्रयाता ।
श्वासोष्मणा म्लानमुखप्रभाणां
नैसर्गिकी श्रीरपि पार्थिवानाम् ॥ ५३ ॥

तामिति ॥ अन्तिकात् निजसमीपात्, दूरतरं अत्यन्तदूरं, प्रयान्तीं

गच्छन्ती, तां दमयन्ती, श्वासोष्मणा श्वासस्य दमयन्त्युपेक्षादुःखजनितनिःश्वासस्य ऊष्मणा उष्णतया, म्लानमुखप्रभाणां म्लाना विवर्णीकृता मुखप्रभा वदनशोभा येषां तेषां तथाभूतानां, पार्थिवानां राज्ञां, दृष्टिः केवलं नयनं एकं एव, न अनुप्रयाता न अनुगता; (किन्तु), नैसर्गिकी स्वभावसिद्धा स्वाभाविकी इति यावत्, (तेषां), श्रीः अपि शोभा अपि, (तां अनुप्रयाता अनुसृतवती) ॥५३॥

नेदीयसो यान्नृपतीनमुञ्च-
द्वसन्तलक्ष्मीरिव सा कुमारी ।
तेषां तरूणामिव कान्तिरुच्चै-
रन्तर्निदाघेन जगाम शोषम् ॥ ५४ ॥

**नेदीयसः इति** ॥ सा, कुमारी राजकुमारी दमयन्ती, नेदीयसः अत्यन्तसमीपवर्तिनः, यान्, नृपतीन् नरेन्द्रान्, (तरून्), वसन्तलक्ष्मीः इव वसन्तस्य वसन्तर्तोः लक्ष्मीः शोभा इव, अमुञ्चत् व्यसृजत् । तेषां नृपतीनां, उच्चैः अतिमहता, अन्तर्निदाघेन अन्तः हृदये उत्पन्नः यः निदाघः औष्ण्य मनस्सन्तापः इत्यर्थः तेन, कान्तिः वदनशोभा शरीरशोभा वा, अन्तर्निदाघेन ग्रीष्ममध्यकालेन, तरूणां वृक्षाणां, कान्तिः शोभा इव, शोष शुष्कतां, जगाम प्राप ॥ ५४ ॥

आरोप्यमाणा रभसातिरेका-
द्गुणेन कर्णान्तिकमागतेन ।
इषुः शरव्यं सुभटोज्झितेव
जगाम दृष्टिर्नलमेव तस्याः ॥ ५५ ॥

**आरोप्यमाणा इति** ॥ कर्णयोः अन्तिक कर्णान्तिक श्रोत्रसमीप, आगतेन श्रुतेन इत्यर्थः (कर्णपर्यन्त आकृष्टेन इति मौर्वीपक्षे), गुणेन नलस्य सौन्दर्यादिसद्गुणेन (मौर्व्या च). रभसातिरेकात् संभ्रमाधिक्यात् सन्तोषाधिक्यात् वा (वेगातिशयात् इति इषुपक्षे), आरोप्यमाणा नलोपरि निवेश्यमाना (आतन्यमाना इति इषुपक्षे), तस्याः दमयन्त्याः, दृष्टिः नयनं, सुभटोज्झिता सुभटेन योधाग्रेसरेण धानुष्केण इत्यर्थः उज्झिता विसृष्टा क्षिप्ता इति यावत्, इषुः बाणः, शरव्यं लक्ष्यं इव, नलमेव, जगाम प्राप ॥ ५५ ॥

धात्री कापि विदर्भराजदुहितुर्भ्रूलीलया व्यापृता
पौष्पं दाम विजृम्भमाणपुलके कण्ठे नलस्यार्पयत् ।
अन्येषां तु महीभृतां प्रतिमुहुः श्वासोत्तरं ताम्यतां
तापोत्सेकमधत्त चेतसि शरश्रेणी मनोजन्मनः ॥ ५६ ॥

**धात्री इति** ॥ विदर्भराजदुहितुः भीमसुतायाः दमयन्त्याः, कापि काचित्, धात्री उपमाता, भ्रूलीलया दमयन्त्याः भ्रूविक्षेपरूपसञ्ज्ञया, व्यापृता नियुक्ता सती, विजृंभमाणपुलके विजृंभमाणः विवर्धमानः पुलकः रोमाञ्चः यस्मिन् तादृशे माल्यस्पर्शजनितानन्दातिशयेन सञ्जातपुलके इत्यर्थः, नलस्य, कण्ठे ग्रीवायां, पुष्पाणां इदं पौष्पं कुसुमनिर्मितं, दाम मालां, आर्पयत् प्राक्षिपत् इत्यर्थः । प्रतिमुहुः मुहुर्मुहुः, श्वासोत्तरं निःश्वासातिरेकपूर्वकं यथा तथा, ताम्यतां खिद्यमानानां, अन्येषां अपरेषां नलव्यतिरिक्तानां इत्यर्थः, महीभृतां राज्ञां, चेतसि तु हृदये पुनः, मनोजन्मनः मनसिजस्य मदनस्य इति यावत् शरश्रेणी बाणपरंपरा, तापोत्सेकं सन्तापाधिक्यं, अधत्त अजनयत ॥ **शार्दूलविक्रीडितं** वृत्तम् ॥ ५६ ॥

चूडाग्रे पुरविद्विषः समुचिते विन्यस्य लेखां विधो-
र्लब्धां कीर्तिमलब्ध तां खलु विधिर्भैमीं नलायार्पयन् ।
एतस्याः समवाप्तये प्रणयितां संपाद्य भूमीभुजा-
मन्येषां विषमायुधस्त्वसदृशारम्भापवादं ययौ ॥ ५७ ॥

**चूडाग्रे इति** ॥ विधिः विधाता स्रष्टा इति यावत्, भैमीं भीमसुतां दमयन्तीं, नलाय, अर्पयन् प्रतिपादयन् सन्, विधोः चन्द्रस्य, लेखां कलां, समुचिते अनुरूपे, पुरद्विषः त्रिपुरारेः रुद्रस्य इति यावत्, चूडाग्रे केशाग्रे, विन्यस्य निधाय, लब्धां संपादितां, तां तादृशीं, कीर्तिं यशः, अलब्ध खलु अवाप खलु । विषमायुधः तु पञ्चबाणः मन्मथः पुनः इति यावत्, अन्येषां इतरेषां, भूमिभुजां राज्ञां, एतस्याः अस्याः दमयन्त्याः, समवाप्तये लाभाय, प्रणयितां विश्वस्तता अनुरागितां प्रार्थयितृत्वं वा, संपाद्य उत्पाद्य, असदृशारंभापवादं असदृशः अननुरूपः यः आरंभः उद्यमः तेन उत्पन्नं अपवादं अपयशः, ययौ प्राप ॥ वृत्तं पूर्ववत् ॥ ५७ ॥

**पौराणामिति वचनं निशम्य हृष्यन्**
**प्रासादं निषधपतिः शनैर्जगाम ।**
**वैदर्भ्याः परिणयमङ्गलाय भीमः**
**संभारं रचयितुमुत्सुको बभूव ॥ ५८ ॥**

**पौराणां इति** ॥ निषधपतिः नलः, इति पूर्वोक्तप्रकारेण, पौराणां नागराणां पुरवासिनां इति यावत्, वचन वाक्यं, निशम्य आकर्ण्य, हृष्यन् सन्तुष्यन् सन्, शनैः कालक्रमेण, प्रासादं स्वस्मै निर्दिष्टं सौधं, जगाम ययौ । भीमः विदर्भराजश्च, वैदर्भ्याः दमयन्त्याः, परिणयमङ्गलाय विवाहोत्सवनिर्वर्तनाय इत्यर्थः, संभारं सामग्रीं, रचयितुं सज्जीकर्तुं, उत्सुकः तत्परः, बभूव अभवत् ॥ **प्रहर्षिणी** वृत्तम् ॥ तल्लक्षणं तु—'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' ॥

इति श्रीसान्धिविग्रहिकमहापात्रश्रीकृष्णानन्दकृतौ सहृदयानन्दे महाकाव्ये नलचरिते दमयन्तीस्वयंवरो नाम

**पञ्चमः सर्गः ॥**



# षष्ठः सर्गः ।

अथावरोधेषु विदर्भभूपते-
वृतं कुमार्या निषधेश्वरं पतिम् ।
निवेदयन्त्यः परिवारसुभ्रुवः
समीहितादप्यधिकं मपेदिरे ॥ १ ॥

**अथ इति** ॥ अथ विवाहसम्भारसज्जीकरणानन्तरं, परिवारसुभ्रुवः परिजनस्त्रियः, नलं, विदर्भभूपतेः भीमराजस्य, कुमार्या सुतया दमयन्त्या, पतिं भर्तारं पतित्वेन इत्यर्थः, वृतं अङ्गीकृत, अवरोधेषु अन्तःपुरस्त्रीषु, निवेदयन्त्यः आवेदयन्त्यः सत्यः, समीहितात् अपि अभिलषितात् वस्तुनः अपि, अधिक अतिरिक्त ममान, प्रपेदिरे लेभिरे ॥ अस्मिन् सर्गे प्रायः **वंशस्थं** वृत्तम् ॥ १ ॥

नलेन सम्बन्धमुपाश्रितं नृपः
कुलं स मेने सविशेषमुज्ज्वलम् ।
महार्णवं क्षीरमयं घनात्यये
करेण संस्पृष्टमिवामृतद्युतेः ॥ २ ॥

**नलेन इति** ॥ सः. नृपः भीमराजः, नलेन निषधेश्वरेण, सम्बन्धं अनुबन्ध, उपाश्रितं प्राप्तं, कुल स्ववशं, घनात्यये वर्षाकालावसाने शरत्काले इत्यर्थः, अमृतमयी द्युतिः यस्य तस्य अमृतद्युतेः सुधांशोः चन्द्रस्य इति यावत्. करेण किरणेन, संस्पृष्ट परामृष्ट, क्षीरमयं दुग्धमयं, महार्णवं इव महोदधि इव दुग्धमहोदधिं इव इत्यर्थः, सविशेषं सातिशयं, उज्ज्वलं प्रकाशमानं, मेने मन्यते स्म ॥ २ ॥

प्रकामगुर्वीमपि संपदं नृप-
स्तदा स मेने नितरामणीयसीम् ।

नवं हि जामातरमर्चयिष्यतां
समृद्धिभाजामपि शंकते मनः ॥ ३ ॥

**प्रकामेति** ॥ तदा तस्मिन् समये, सः, नृपः भीमराजः, प्रकामगुर्वी प्रकाम अत्यन्तं गुर्वी महती अपि, संपदं निजैश्वर्यं, नितरां नितान्तं, अणीयसी अल्पीयसीं, मेने गणयामास । हि यस्मात् कारणात्, नवं नूतनं, जामातरं निजकन्याभर्तारं, अर्चयिष्यतां सत्करिष्यतां पूजयितुकामानां इत्यर्थः, समृद्धिभाजां अपि संपन्नानां अपि महदैश्वर्यवतां अपि इति यावत्, मनः मानसं, शङ्कते बिभेति ॥ ३ ॥

भविष्यतीयं महिषी महीपते-
र्नलस्य लोकत्रयविश्रुतौजसः ।
विचिन्तयन्नित्थमपश्यदात्मजां
स गौरवस्नेहकरम्बितं तदा ॥ ४ ॥

**भविष्यतीति** ॥ इयं एषा मत्सुता दमयन्ती इत्यर्थः, लोकत्रयविश्रुतौजसः लोकानां त्रय लोकत्रयं लोकत्रये विश्रुतं ओजः यस्य तस्य त्रिभुवनविख्यातपराक्रमस्य इत्यर्थः, नलस्य महीपतेः नलमहाराजस्य, महिषी भार्या राजपत्नी इति यावत्, भविष्यति । इत्थं एव, विचिन्तयन मन्वानः सन्, सः भीमः, तदा तस्मिन् समये, आत्मजां स्वतनयां दमयन्तीं, गौरवस्नेहकरम्बितं गौरव बहुमानः स्नेहः प्रीतिः वात्सल्य इति यावम ताभ्यां करम्बित मिश्रित यथा तथा, अपश्यत् अद्राक्षीत् ॥ ४ ॥

पुरोहितेनाथ समं द्विजातिभि-
र्विवाहलग्ने विनिवेदिते शुभे ।
दमस्वसुर्माङ्गलिकेषु कर्मसु
न्ययोजयद्बन्धुवधूजनं नृपः ॥ ५ ॥

**पुरोहितेनेति** ॥ अथ अनन्तरं, द्विजातिभिः समं द्विजैः सह, पुरोहितेन पुरोधसा, शुभे मङ्गले अतिप्रशस्ते इति यावत्, विवाहलग्ने उद्वाहमुहूर्ते, विनिवेदिते विज्ञापिते सति, नृपः भीमराजः, दमस्वसुः दमभगिन्याः दमयन्त्याः,

माङ्गलिकेषु मङ्गलं प्रयोजनं एषां तानि माङ्गलिकानि तेषु मङ्गलावहेषु इत्यर्थः, कर्मसु विवाहकार्येषु इत्यर्थः, बन्धुवधूजनं बान्धवस्त्रीजनं, न्ययोजयत् प्रेरयामास ॥

**गृहे गृहे न्यस्तनवीनतोरणा**
**पदे पदेऽलंकृतराजपद्धतिः ।**
**मुहुर्मुहुर्मूर्च्छिततूर्यनिस्वना**
**श्रियं ययौ कामपि सा पुरी तदा ॥ ६ ॥**

**गृहे गृहे इति** ॥ तदा तस्मिन् समये, गृहे गृहे प्रतिगृहं, न्यस्तनवीनतोरणा न्यस्तानि विरचितानि नवीनानि नूतनानि तोरणानि बहिर्द्वाराणि यस्यां सा तथाभूता, पदे पदे प्रतिपदं, अलङ्कृतराजपद्धतिः अलङ्कृता परिष्कृता राजपद्धतिः राजमार्गः यस्याः सा तादृशी, मुहुः मुहुः पुनः पुनः, मूर्च्छिततूर्यनिस्वना मूर्च्छितः प्रवृद्धः तूर्याणां भेरीणां निस्वनः शब्दः यस्यां सा तथाभूता, सा, पुरी विदर्भनगरी, कामपि अनिर्वचनीयां, श्रियं शोभां, ययौ प्राप ॥ ६ ॥

**ततः कुलाचारविदा पुरोधसा**
**कृताधिवासां तनयां महीपतेः ।**
**विधाय सङ्गीतकमङ्गलं स्त्रियः**
**समेत्य तामस्नपयन्यथाविधि ॥ ७ ॥**

**ततः इति** ॥ ततः तदनन्तरं, कुलाचारविदा कुलसंप्रदायज्ञेन, पुरोधसा पुरोहितेन, कृताधिवासां गन्धमाल्याद्यैः कृतसंस्कारां इत्यर्थः ('संस्कारो गन्धमाल्याद्यैः यः स्यात्तदधिवासनम् ।' इत्यमरः), महीपतेः भीमराजस्य, सुतां तनयां दमयन्तीं, स्त्रियः नार्यः, समेत्य आगत्य, सङ्गीतकमङ्गलं गानरूपं मङ्गलं मङ्गलावहं गानं इत्यर्थः, विधाय कृत्वा, तां दमयन्तीं, यथाविधि विधिं अनतिक्रम्य विधिवत् इति यावत्, अस्नपयन् स्नापयामासुः ॥ ७ ॥

**निसर्गतः काञ्चनयष्टिसच्छवि-**
**र्वितन्वती स्नानविधिं नृपात्मजा ।**
**नवेन काश्मीररसेन रञ्जिता**
**न्यवेदि सौरभ्यभरैर्न तु श्रिया ॥ ८ ॥**

**निसर्गतः इति** ॥ निसर्गतः स्वभावतः एव, काञ्चनयष्टिसच्छविः कनकलतासमानकान्तिः, स्नानविधिं स्नानक्रियां, वितन्वती कुर्वती, नृपात्मजा भीमराजतनया दमयन्ती, नवेन प्रत्यग्रेण नूतनेन इति यावत्, काश्मीररसेन कुङ्कुमद्रवेण, रञ्जिता अनुलिप्ता सती, सौरभ्यभरैः काश्मीररसपरिमलातिशयैः एव, न्यवेदि इयं काश्मीररसराञ्जिता इति संसूचिता आसीत्; श्रिया काश्मीररसकान्त्या तु, न (न्यवेदि)। (निसर्गतः तदङ्गस्य काञ्चनयष्टिसच्छायत्वात् इति भावः) ॥ ८ ॥

ततोऽङ्गनाः क्षौमसमावृतैः करै-
र्यथा यथाम्भःपृषतान्यमार्जयन् ।
तथा तथास्याः परिणाहशालिनी
बभूव लावण्यमयी तरङ्गिणी ॥ ९ ॥

**ततः इति** ॥ ततः तदनन्तरं, अङ्गनाः स्त्रियः, क्षौमसमावृतैः क्षौमेण दुकूलेन समावृतैः आच्छादितैः, करैः हस्तैः, अम्भःपृषतानि दमयन्तीशरीरस्थान् जलबिन्दून्, यथा यथा येन येन प्रकारेण, अमार्जयन् अपोहयन् इत्यर्थः; तथा तथा तेन तेन प्रकारेण, अस्याः एतस्याः दमयन्त्याः, लावण्यमयी सौन्दर्यरूपा ('मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते') तरङ्गिणी नदी, परिणाहशालिनी विस्तारशालिनी, बभूव ॥ ९ ॥

विडम्बयन्ती कनकं तनुश्रिया
स्मितेन मुक्तामधरेण विद्रुमम् ।
कराङ्गुलीभिः कुरुविन्दमञ्जरीं
बभूव भूषान्तरनिस्स्पृहेव सा ॥ १० ॥

**विडम्बयन्ती इति** ॥ सा दमयन्ती, तनुश्रिया शरीरशोभया, कनकं स्वर्णं, स्मितेन मन्दहासेन, मुक्तां मौक्तिकमणिं, अधरेण ओष्ठेन, विद्रुमं प्रवालं, कराङ्गुलीभिः करशाखाभिः, कुरुविन्दमञ्जरीं तदाख्यपुष्पस्तबकं च पद्मरागमणिसंघातं च वा, विडम्बयन्ती परिहसन्ती अतिशयाना सती इत्यर्थः, (अतः एव), भूषान्तरनिस्स्पृहा इव अन्याः भूषाः भूषान्तराणि आभरणान्तराणि तेषु निस्स्पृहा इव निरभिलाषा इव, बभूव ॥ १० ॥

अनन्तरं स्नानविधेर्नृपात्मजा
पिनद्धबालार्कनिभांशुका बभौ ।
घनाम्बुवर्षेण कृताभिषेचना
लतेव नीरन्ध्रमुदीर्णपल्लवा ॥ ११ ॥

**अनन्तरं इति** ॥ नृपात्मजा भीमराजतनया दमयन्ती, स्नानविधेः अभिषेककृत्यात्, अनन्तरं परं, पिनद्धबालार्कनिभांशुका पिनद्धं आच्छादित धारितं इति यावत् बालार्कनिभं बालसूर्यसदृशं अंशुकं यस्याः सा तादृशी सती, घनाम्बुवर्षेण मेघजलवृष्ट्या यद्वा घनं सान्द्रं यत् अम्बुवर्षं जलवृष्टिः तेन, कृताभिषेचना कृतं अभिषेचनं यया सा विहितासेचना, नीरन्ध्रं अविरलं यथा तथा, उदीर्णपल्लवा उद्गतकिसलया, लता इव वल्ली इव, बभौ शुशुभे ॥ ११ ॥

रराज कालागरुधूपलिप्सया
विधुन्वती कुन्तलभारमायतम् ।
हिरण्मयी मन्मथकेतुयष्टिका
मरुच्चलन्नीलनिचोलिकेव सा ॥ १२ ॥

**रराजेति** ॥ सा दमयन्ती, कालागरुधूपलिप्सया कालागरूणां यः धूपः परिमलधूमः तस्य लिप्सा (लब्धु इच्छा) ईप्सा तया हेतुना, आयत अतिदीर्घं, कुन्तलभारं कचभार, विधुन्वती चालयन्ती सती, मरुच्चलन्नीलनिचोलिका मरुता वायुना चलन्ती नीला श्यामवर्णा निचोलिका ध्वजपटः यस्याः सा तादृशी, हिरण्मयी स्वर्णमयी, मन्मथकेतुयष्टिका इव मन्मथस्य मदनस्य केतुयष्टिका इव ध्वजदण्डः इव, रराज बभौ ॥ १२ ॥

विनिर्मिमाणा करयोर्युगेन सा
मनोभिरामां कबरीं कृशोदरी ।
करम्ब्यमाणां करजांशुभिर्निजै-
रयत्नमेनां विदधे सगर्भकाम् ॥ १३ ॥

**विनिर्मिमाणा इति** ॥ मनोभिरामां मनोज्ञां अतिरमणीयां इति यावत्, कबरीं स्वकेशपाशं, करयोः पाण्योः, युगेन युगलेन, विनिर्मिमाणा रचयन्ती

परिष्कुर्वती इति यावत्, कृशोदरी तनुमध्या, सा दमयन्ती, निजैः स्वीयैः, करजांशुभिः करजानां अङ्गुलीनां अंशुभिः कान्तिभिः, करम्ब्यमाणां व्याप्तां, एनां एतादृशी कबरीं, अयत्न निर्यत्न यथा तथा यत्न विनैव इत्यर्थः, सगर्भकां गर्भकेण माल्येन सहिता तां तादृशीं धृतपुष्पमालां इत्यर्थः, विदधे चक्रे ॥ १३ ॥

**स्वभावतः कोकनदानुकारिणौ**
**प्रसाधयन्त्यश्चरणौ दमस्वसुः ।**
**अलक्तकं वीक्ष्य जितं तयोः श्रिया**
**क्षणं प्रपन्नाः करणीयमुग्धताम् ॥ १४ ॥**

**स्वभावतः इति** ॥ स्वभावतः निसर्गात् एव, कोकनदानुकारिणौ रक्तोत्पलसदृशौ, दमस्वसुः दमयन्त्याः, चरणौ पादौ, प्रसाधयन्त्यः अलक्तकरसेन अलङ्कुर्वत्यः स्त्रियः, अलक्तकं लाक्षारसं, तयोः दमयन्तीचरणयोः, श्रिया शोभया, जितं अभिभूतं अतिशयितं इत्यर्थः, वीक्ष्य दृष्ट्वा, क्षणं क्षणकालं, करणीयमुग्धतां करणीये कर्तव्ये मुग्धता मूढतां, प्रपन्ना प्राप्ताः किंकर्तव्यतामूढा जाताः इत्यर्थः ॥ १४ ॥

**चकार कालाञ्जनलेखयाञ्चिते**
**विलोचने यत्पृथिवीन्द्रनन्दिनी ।**
**ततस्तयोः श्रीरवतंसताजुषो-**
**र्निरास नीलाम्बुजयोस्तुलाकथाम् ॥ १५ ॥**

**चकारेति** ॥ यत् यतः इत्यर्थः यस्मात् कारणात्, पृथिवीन्द्रनन्दिनी भीमराजसुता दमयन्ती, विलोचने स्वनयने, कालाञ्जनलेखया कालं कृष्णं यत् अञ्जनं कज्जलं तस्य लेखा रेखा तया, अञ्चिते युक्ते अलङ्कृते इत्यर्थः, चकार विदधे ; ततः तस्मात् कारणात्, तयोः विलोचनयोः, श्रीः शोभा, अवतंसताजुषोः शेखरत्वं प्राप्तयोः, नीलाम्बुजयोः नीलोत्पलयोः, तुलाकथां सादृश्यवार्ता, निरास दूरीचकार ॥ १५ ॥

**चकार कस्तूरिकया सकौतुकं**
**वधूमुखे यत्तिलकं प्रसाधिका ।**

जिगाय तत्कान्तिविशेषसंपदा
मधुव्रतं निश्चलमम्बुजे स्थितम् ॥ १६ ॥

चकारेति ॥ प्रसाधिका दमयन्त्याः भूषणाद्यलङ्कारकारिणी स्त्री, वधूमुखे वध्वाः नववध्वाः दमयन्त्याः मुखे वदने ललाटे इत्यर्थः, सकौतुकं सौत्सुक्यं यथा तथा, कस्तूरिकया मृगमदेन, यत्, तिलकं विशेषकं, चकार कृतवती; तत् तिलकं, कान्तिविशेषसम्पदा विशेषशोभासमृद्ध्या, अम्बुजे पद्मे, निश्चलं निश्चेष्टं यथा तथा, स्थितं लग्नं, मधुव्रतं भ्रमरं, जिगाय अतिशिश्ये इत्यर्थः ॥ १६ ॥

ततः कुमारी मुकुरेऽनुबिम्बितं
विलोकयामास सकृन्निजं मुखम् ।
मुहुर्मुहुः प्रैक्षत नैषधं तु सा
निवेशितं चेतसि मन्मथेषुभिः ॥ १७ ॥

ततः इति ॥ ततः अलङ्करणानन्तरं, कुमारी भीमराजतनया, सा दमयन्ती, मुकुरे दर्पणे, अनुबिम्बितं प्रतिफलितं, निजं स्वकीयं, मुखं वदनं, सकृत् एकवारं एव, विलोकयामास निरीक्षाञ्चक्रे । मन्मथेषुभिः मदनबाणैः, चेतसि निजहृदि, निवेशितं निहितं, नैषधं तु नलं पुनः, मुहुः मुहुः पुनः पुनः, प्रैक्षत अवलोकयामास ॥

वधूः सदूर्वाङ्कुरमार्द्रकुङ्कुमं
करेण यत्कौतुकसूत्रमग्रहीत् ।
हरिन्मणीनां किरणैर्विराजता
तुलां दधे काञ्चनकङ्कणेन तत् ॥ १८ ॥

वधूः इति ॥ वधूः नववधूः दमयन्ती, सदूर्वाङ्कुरं दूर्वाख्यतृणविशेषप्ररोहसहितं, (तथा), आर्द्रकुङ्कुमं आर्द्रं सार्द्रं कुङ्कुमं घुसृणं यस्मिन् तत् तादृशं, यत्, कौतुकसूत्रं मङ्गलतन्तुं, करेण हस्तेन, अग्रहीत् अधारयत्; तत् कौतुकसूत्रं, हरिन्मणीनां इन्द्रनीलमणीनां, किरणैः अंशुभिः, विराजता प्रकाशमानेन, काञ्चनकङ्कणेन स्वर्णमयवलयेन, तुलां उपमां, दधे प्राप ॥ १८ ॥

वधूर्विवाहोचितवेषपेशलं
प्रसाधिता कौतुकसूत्रधारिणी ।
अमन्यतान्तःपुरसुन्दरीजनै-
रुपस्थिता मङ्गलदेवतेव सा ॥ १९ ॥

**वधूः इति** ॥ विवाहोचितवेषपेशलं विवाहाय उद्वाहाय उचितः अनुरूपः यः वेषः नेपथ्यं तेन पेशलं मनोहरं यथा तथा, प्रसाधिता अलंकृता, कौतुकसूत्र-धारिणी धृतमङ्गलप्रतिसरा, सा, वधूः दमयन्ती, अन्तःपुरसुन्दरीजनैः अन्तः-पुरे अवरोधे विद्यमानाः ये सुन्दरीजनाः रमणीजनाः तैः (कर्तृभिः), उपस्थिता सन्निहिता मूर्तिमती इत्यर्थः, मङ्गलदेवता इव माङ्गल्याधिष्ठातृदेवी इव, अमन्यत संभाव्यते स्म ॥ १९ ॥

अथ प्रयुक्तं निपुणैः प्रसाधकै-
र्नलोऽपि यं वेषविशेषमग्रहीत् ।
अवर्धयत्तस्य स कान्तिसंपदं
तुषारभानोः शरदेव सङ्गमः ॥ २० ॥

**अथ इति** ॥ अथ अनन्तरं, नलः अपि, निपुणैः प्रसाधनविधिकुशलैः प्रसाधकैः अलंकर्तृभिः सेवकैः, प्रयुक्तं रचितं, यं, वेषविशेषं नेपथ्यविशेषं, अग्रहीत् स्वीचकार ; सः वेषविशेषः, तुषारभानोः शीतकिरणस्य चन्द्रस्य इति यावत्, शरदा शरत्कालेन, सङ्गमः इव संयोगः इव, तस्य नलस्य, कान्तिसंपदं शोभातिशयं, अवर्धयत् वर्धयामास ॥ २० ॥

निसर्गतो यस्तनुरूपसंपदा
बभूव लोकस्य विलोचनोत्सवः ।
दमस्वसुः पाणिपरिग्रहोचिता
प्रसाधनश्रीः किमिवास्य वर्ण्यते ॥ २१ ॥

**निसर्गतः इति** ॥ यः नलः, निसर्गतः स्वभावात् एव, तनुरूपसंपदा शरीरसौन्दर्यातिशयेन, लोकस्य सकलजनस्यापि, विलोचनोत्सवः नेत्रानन्दकरः इत्यर्थः, बभूव आसीत् ; अस्य एतादृशस्य नलस्य (संबन्धिनी), दमस्वसुः

दमयन्त्याः, पाणिपरिग्रहोचिता पाणिपरिग्रहाय विवाहाय इत्यर्थः उचिता अनुरूपा, प्रसाधनश्रीः अलंकारशोभा, किमिव कथं वा, वर्ण्यते प्रशस्यते ॥ २१ ॥

**ततो विदर्भाधिपतेः प्रशासना-**
**दमात्यमुख्याः सदसि स्थितं नलम् ।**
**विभो प्रभुर्नः सहितः सुहृज्जनैः**
**प्रतीक्षते त्वामिति सन्न्यवेदयन् २२ ॥**

**ततः इति** ॥ ततः तदनन्तरं, विदर्भाधिपतेः भीमराजस्य, प्रशासनात् आज्ञया इत्यर्थः, अमात्यमुख्याः भीमस्य मुख्यसचिवाः, सदसि सभायां, स्थितं निषण्णं, नलं प्रति, 'विभो हे नलमहाराज, नः अस्माकं, प्रभुः राजा, सुहृद्भिः स्निग्धैः, सहितः उपेतः सन्, त्वां भवन्तं, प्रतीक्षते दमयन्तीपाणिग्रहणाय प्रतिपालयति ।' इति एवं, सन्न्यवेदयन् निवेदयामासुः विज्ञापयामासुः इति यावत् ॥ २२ ॥

**अथायमासन्नसमीहितोदयः**
**पुरोधसा संभृतमङ्गलक्रियः ।**
**समन्ततो बन्धुजनैः समावृतः**
**प्रभुर्विदर्भाधिपतेर्गृहं ययौ ॥ २३ ॥**

**अथेति** ॥ आसन्नसमीहितोदयः आसन्नः संनिकृष्टः आसन्नवर्ती इति यावत् समीहितोदयः मनोरथप्राप्तिः यस्य सः तथाभूतः, पुरोधसा पुरोहितेन, संभृतमङ्गलक्रियः संभृता संपादिता सज्जीकृता इति यावत् मङ्गलक्रिया विवाहमङ्गलविधिः यस्य सः तादृशः, अयं असौ, प्रभुः नलमहाराजः, समन्ततः सर्वतः, बन्धुजनैः बान्धवसमूहैः, समावृतः परिवृतः सन्, विदर्भाधिपतेः भीमराजस्य, गृहं मन्दिरं, ययौ प्राप ॥ २३ ॥

**सलीलमारुह्य मतङ्गजं नलः**
**स्वदेहलीमेव न यावदत्यगात् ।**
**अमुष्य तावत्पृतनाग्रसारणी**
**विदर्भराजस्य गृहानपूरयत् ॥ २४ ॥**

**सलीलमिति** ॥ नलः, सलीलं सविलासं यथा तथा, मतङ्गजं गजं, आरुह्य आस्थाय, यावत् यावता कालेन, स्वदेहलीं एव निजगृहद्वारदेशं एव इत्यर्थः, अत्यगात् अतिचक्राम ; तावत् तावता कालेन, अमुष्य अस्य नलस्य, पृतनाग्रसारणी पृतनायाः सेनायाः अग्रं अग्रभागः सेनामुखं इत्यर्थः तत् एव सारणी नदी, विदर्भराजस्य भीमराजस्य, गृहान् मन्दिरं, अपूरयत् पूरयामास (नलगृहद्वारात् आरभ्य भीमगृहपर्यन्तं व्याप्य नलसेना स्थिता ; अतः अपरिमिता नलसेना इति भावः) ॥ २४ ॥

**विलोकमानाः पथि नैषधं जनाः**
**परस्परं पीडितदेहयष्टयः ।**
**अशक्नुवन्तश्चलितुं पदात्पदं**
**हृदा च दृग्भ्यां च परं तमन्वयुः ॥ २५ ॥**

**विलोकमानाः इति** ॥ पथि राजमार्गे, नैषधं नलं, विलोकमानाः निरीक्षमाणाः, जनाः विदर्भनगरवासिनः जननिवहाः, परस्परं अन्योन्यं, पीडितदेहयष्टयः पीडिता जनसमर्देन संघट्टिता देहयष्टिः शरीरयष्टिः यष्टिसदृशशरीर इत्यर्थः येषां ते तथाभूताः सन्तः, पदात् पदं एक पदमपि इति अर्थः, चलितु गन्तुं, अशक्नुवन्तः असमर्थाः सन्तः, हृदा मनसा, दृग्भ्यां च परं नेत्राभ्यां च केवलं, तं नलं, अन्वयुः अनुजग्मुः ॥ २५ ॥

**स्तनैर्नितम्बैश्च नितान्तपीवरै-**
**र्निवार्यमाणेषु समीपवर्तिषु ।**
**न मध्यभागे तनुमध्यमाः परं**
**निपीडिताः पौरजनावृते पथि ॥ २६ ॥**

**स्तनैः इति** ॥ तनु मध्यमं अवलग्नं यासां ताः तनुमध्यमाः कृशोदर्यः, पौरजनावृते पौरजनैः पुरवासिजनैः आवृते संकुले, पथि राजमार्गे, नितान्तपीवरैः नितान्तं अत्यन्तं पीवरैः पीनैः बृहद्भिः इति यावत्, स्तनैः कुचैः, नितम्बैः श्रोणीभिश्च, समीपवर्तिषु स्वसमीपस्थितेषु जनेषु, निवार्यमाणेषु निरुध्यमानेषु सत्सु, मध्यभागे परं मध्यदेशे एव केवलं, (मध्यभागस्य अतिकृशत्वात् इत्यर्थः), निपीडिताः संमृदिताः, न (अभवन्) ॥ २६ ॥

नरेश्वरे गच्छति राजवर्त्मना
वपुःश्रियावर्जितविश्वलोचने ।
इति व्यचेष्टन्त मनोभवाज्ञया
निरस्तनारीसुलभत्रपाः स्त्रियः ॥ २७ ॥

**नरेश्वरे इति** ॥ वपुषः श्रीः तया वपुःश्रिया शरीरशोभया, आवर्जितविश्वलोचने आवर्जितानि आकृष्टानि विश्वेषां सर्वेषां लोचनानि येन तस्मिन् तथाभूते, नरेश्वरे नलमहाराजे, राजवर्त्मना राजमार्गेण, गच्छति याति सति, स्त्रियः तत्रस्थाः नार्यः, मनोभवाज्ञया मनोभवस्य मन्मथस्य आज्ञया शासनेन, निरस्तनारीसुलभत्रपाः निरस्ता त्यक्ता नारीणां स्त्रीणां सुलभा सुप्रापा योग्या इत्यर्थः त्रपा लज्जा याभिः ताः तथाभूताः सत्यः, इति वक्ष्यमाणप्रकारेण, व्यचेष्टन्त समाचरन् इत्यर्थः ॥ २७ ॥

पथि प्रयान्तं निषधेन्द्रमीक्षितुं
समुत्सुका दृष्टिमधःप्रसारिणीम् ।
तिरोदधत्तुङ्गमुरोजयोर्युगं
निनिन्द काचिद्वलभीगता वधूः ॥ २८ ॥

**पथि इति** ॥ पथि राजमार्गे, प्रयान्तं गच्छन्तं, निषधेन्द्रं नलमहाराजं, ईक्षितुं द्रष्टुं, समुत्सुका सोत्कण्ठा, (अतः एव), वलभीगता वलभी गोपानसं 'गोपानसी तु वलभी च्छादने वक्रदारुणि' इत्यमरः, गता प्राप्ता, काचित् काचन, वधूः नारी, अधःप्रसारिणीं अधः अधस्तात् प्रसारिणीं प्रसरन्तीं, दृष्टिं स्वदर्शनं, तिरोदधत् गूहत्, तुङ्गं अत्युन्नतं, उरोजयोः स्तनयोः, युगं द्वन्द्वं, निनिन्द उपालेभे निन्दितवती इत्यर्थः ॥ २८ ॥

सह स्थिता जीवितबन्धुना परा
निरीक्षितुं निर्भरमक्षमा नलम् ।
तदीयदेहप्रतिमाङ्कितं निजं
मुहुर्मुहुः प्रैक्षत रत्नकङ्कणम् ॥ २९ ॥

**सह इति** ॥ जीवितबन्धुना सह निजप्राणेश्वरेण सह भर्त्रा सह इति

यावत्, स्थिता वर्तमाना इत्यर्थः, (अतः एव), नल, निर्भरं नितान्तं स्वैरं इति यावत्, निरीक्षितुं द्रष्टुं, अक्षमा असमर्था, परा (अपरा वा) अन्या काचित् वधूः, तदीयदेहप्रतिमाङ्कितं तदीयस्य नलसबन्धिनः देहस्य शरीरस्य प्रतिमया प्रतिबिम्बेन अङ्कित चिह्नित, निजं स्वकीय, रत्नकङ्कणं मणिवलय, मुहुः मुहुः शश्वत्, प्रैक्षत निरीक्षाञ्चक्रे ॥ २९ ॥

**नलस्य कान्त्या हृतमानसापरा**
**वधूर्विधित्सुर्मकरीं कपोलयोः ।**
**तमेव शश्वल्लिखती ससंभ्रमं**
**सखीजनैः पार्श्वगतैर्न्यषिध्यत ॥ ३० ॥**

**नलस्य इति** ॥ कपोलयोः गण्डस्थलयोः, मकरीं मकरिकापत्ररचनां इत्यर्थः, विधित्सुः विधातु इच्छु चिकीर्षन्ती इत्यर्थः, अपरा अन्या, वधूः स्त्री, नलस्य निषधेश्वरस्य, कान्त्या शरीरशोभया, हृतमानसा अपहृतचित्ता सती त एव नलं एव, शश्वत् पुनः पुनः, लिखती रचयन्ती सती, पार्श्वगतैः समीपवर्तिभिः, सखीजनैः आलीजनैः, ससंभ्रम सम्भ्रमेण सहित यथा तथा, न्यषिध्यत न्यवार्यत ॥ ३० ॥

**कयापि मुग्धाङ्गनया नरेश्वरे**
**प्रयाति वातायनसंमुखात्पथः ।**
**अपाङ्गयोरुत्पलपत्रदीर्घयो-**
**रशिक्षि तिर्यक्चलनेषु चातुरी ॥ ३१ ॥**

**कयापि इति** ॥ नरेश्वरे नलमहाराजे, वातायनसंमुखात् गवाक्षाभिमुखात्, पथः राजमार्गात्, प्रयाति गच्छति सति, कयापि कयाचित्, मुग्धाङ्गनया सुन्दरस्त्रिया, उत्पलपत्रदीर्घयोः नीलोत्पलदलवत् आयतयोः, अपाङ्गयोः कटाक्षयोः, तिर्यक्चलनेषु तिरश्चीनभ्रमणेषु, चातुरी चातुर्यं नैपुणी इति यावत्, अशिक्षि अभ्यस्यते स्म ॥ ३१ ॥

**मृगेक्षणा काचन भावनावशा-**
**द्विलोकयन्ती निषधेश्वरं पुरः ।**

गतेऽपि तस्मिन्परिलङ्घ्य दृक्पथं
चिराय नैव स्वगृहं न्यवर्तत ॥ ३२ ॥

**मृगेक्षणा इति** ॥ काचन काचित्, मृगेक्षणा हरिणलोचना, भावनावशात् कल्पनावशात् अनवरततत्स्मरणवशात् हेतोः इत्यर्थः, निषधेश्वरं नल, पुरः पुरतः स्वाग्रतः इति यावत्, विलोकयन्ती सदैव पश्यन्ती सती, तस्मिन् नले, दृक्पथं नयनमार्गं, परिलङ्घ्य अतीत्य, गते अपि याते सत्यपि, चिराय सुचिरं, स्वगृहं निजमन्दिरं प्रति, नैव न्यवर्तत नैव प्रत्याजगाम ॥ ३२ ॥

वधूर्दृशौ रञ्जयितुं समुत्सुका
निवेश्य कालाञ्जनमङ्गुलीमुखे ।
त्वरावशात्तत् परिलिप्य गण्डयो-
र्बहिर्गता कापि जनानहासयत् ॥ ३३ ॥

**वधूः इति** ॥ दृशौ नयने, रञ्जयितुं अलंकर्तुं, समुत्सुका तत्परा, कापि काचित्, वधूः नारी, कालाञ्जनं नीलकज्जलं, अङ्गुलीमुखे अङ्गुल्याः करशाखायाः मुखे अग्रे, निवेश्य निक्षिप्य, त्वरावशात् नलनिरीक्षणसंभ्रमवशात् हेतोः, तत कालाञ्जनं, गण्डयोः कपोलयोः, परिलिप्य अनुलिप्य, बहिः गृहबहिर्भागे, गता याता सती, जनान् लोकान्, अहासयत् परिहासमयामास ॥ ३३ ॥

ततः सुधालेपसितं निवेशनं
विवेश भीमस्य नलः सुहृद्वृतः ।
ग्रहैः समन्तादुदितैरनुद्रुत-
स्तुषारधामेव शरद्बलाहकम् ॥ ३४ ॥

**ततः इति** ॥ ततः तदनन्तरं, नलः, सुहृद्वृतः सुहृद्भिः स्निग्धजनैः वृतः परिवृतः सन्, सुधालेपसितं सुधालेपेन चूर्णलेपेन सितं धवलं, भीमस्य विदर्भाधिपतेः, निवेशनं गृहं, समन्तात् अभितः, उदितैः आविर्भूतैः, ग्रहैः अङ्गारकादिग्रहैः, अनुद्रुतः अनुगतः, तुषारधामा चन्द्रः, शरद्बलाहकं इव शरत्कालमेघं इव, विवेश प्राविशत् ॥ ३४ ॥

अथोपयन्तुः प्रणयाभिवृद्धये
ननाम कन्या गिरिजां गुरोर्गिरा ।
प्रसाद्य तामेव भृशं समश्नुते
वधूजनः श्लाघ्यगुणोऽपि काङ्क्षितम् ॥ ३५ ॥

**अथेति** ॥ अथ अनन्तरं, कन्या कुमारी दमयन्ती, गुरोः पितुः भीमस्य (पुरोहितस्य वा), गिरा वचनेन, उपयन्तुः परिणेतुः भर्तुः इति यावत्, प्रणयाभिवृद्धये अनुरागाभिवृद्ध्यर्थं, गिरिजां गौरी, ननाम ववन्दे । (यत.), श्लाघ्यगुणः अपि उत्कृष्टगुणः सन्नपि, वधूजनः नववध्वः इत्यर्थः, तां एव पार्वतीदेवी एव, प्रसाद्य प्रसन्नां कृत्वा, काङ्क्षित अभीप्सित, भृश अधिक, समश्नुते समवाप्नोति ॥ ३५ ॥

कुलाङ्गनानामभजद्विधेयतां
नलस्तदा माङ्गलिकेषु नर्मसु ।
सतां समाचारमवारितं श्रुतौ
श्रुतं प्रपन्ना अपि नोज्झितुं क्षमाः ॥ ३६ ॥

**कुलाङ्गनानामिति** ॥ तदा तस्मिन् समये, नलः, मङ्गलाय हितानि माङ्गलिकानि तेषु माङ्गलिकेषु मङ्गलावहेषु, नर्मसु परिहासोक्तिषु विषये (कर्मसु इति पाठान्तर), 'कुलाङ्गनानां कुलस्त्रीणा, विधेयतां परतन्त्रतां, अभजत् प्राप । (यतः), श्रुतं शास्त्रज्ञानं, प्रपन्नाः अपि अधिगताः अपि, श्रुतौ वेदे, अवारित अप्रतिषिद्धं, सतां साधूनां, समाचार समुदाचार, उज्झितु परित्यक्तु, क्षमाः शक्ताः, न (भवन्ति) ॥ ३६ ॥

ततो गतः कौतुकवेदिकान्तरं
विदर्भराजेन नलः कृतार्चनः ।
समाहितान्तःकरणं समादधे
हुताशनं तत्र विवाहसाक्षिणम् ॥ ३७ ॥

**ततः इति** ॥ ततः तदनन्तरं, कौतुकवेदिकान्तरं कौतुकार्थं विवाहमङ्गलार्थं या वेदिका परिष्कृता भूमिः विवाहवेदिः तस्याः अन्तरं मध्यप्रदेशं,

गतः प्राप्तः, नलः, विदर्भराजेन भीमेन, कृतार्चनः कृता विहिता अर्चना पूजा यस्मै सः तादृशः सन्, तत्र कौतुकवेदिकायां, समाहितान्तःकरणं सावधानचित्तं यथा तथा, विवाहसाक्षिणं विवाहस्य उद्वाहस्य साक्षिणं साक्षात् द्रष्टारं, हुताशनं अग्निं, समादधे जुहाव होमादिना अप्रीणयत् इत्यर्थः ॥ ३७ ॥

नलस्य पाणौ विधिवद्वधूकरं
विधाय यावन्न ददौ जलं गुरुः ।
परस्परस्पर्शवशात्तदैव तौ
बभूवतुः स्वेदजलैः परिप्लुतौ ॥ ३८ ॥

**नलस्य इति** ॥ गुरुः दमयन्तीपिता भीमः, वधूकरं वध्वाः नवोढायाः दमयन्त्याः करं पाणिं, नलस्य, पाणौ हस्ते, विधिवत् यथाविधि, विधाय निक्षिप्य, यावत् यावता कालेन, जलं दानजलं, ददौ प्रायच्छत्; तदैव तावता कालेन एव, तौ दमयन्तीनलौ, परस्परस्पर्शवशात् अन्योन्यस्पर्शवशात् हेतोः, स्वेदजलैः घर्मोदकैः, परिप्लुतौ परिक्लिन्नौ आर्द्रौ इति यावत्, बभूवतुः ॥ ३८ ॥

ततो नलस्य प्रतिपादितः करे
विदर्भराजेन दमस्वसुः करः ।
निनिन्द कान्त्या नितरां मनोज्ञया
नभस्वतावर्जितमम्बुजेऽम्बुजम् ॥ ३९ ॥

**ततः इति** ॥ ततः तदनन्तरं, विदर्भराजेन भीमेन, नलस्य, करे पाणौ, प्रतिपादितः अर्पितः, दमस्वसुः दमयन्त्याः, करः पाणिः, नितरां भृशं, मनोज्ञया रमणीयया, कान्त्या शोभया हेतुना, नभस्वता वायुना, अम्बुजे पद्मे, आवर्जितं संश्लेषितं, अम्बुज पद्मं, निनिन्द परिहसति स्म अतिशिश्ये इत्यर्थः ॥

हुताशनस्तावुपशिक्षयन्निव
प्रदक्षिणप्रक्रमणं वधूवरौ ।
भृशं तथैवाभ्रमयन्मुहुर्मुहु-
र्निजां शिखां लाजहविर्भिरर्चितः ॥ ४० ॥

**हुताशन इति** ॥ हुताशनः अग्निः, लाजहविर्भिः लाजैः हविर्भिश्च

लाजरूपैः हविर्भिः वा, अर्चितः पूजितः सन्, तौ, वधूवरौ दमयन्तीनलौ, प्रदक्षिणप्रक्रमणं प्रदक्षिणप्रकार, उपशिक्षयन् इव उपदिशन् इव, निजां स्वीयां, शिखां ज्वालां, मुहु. मुहुः शश्वत्, तथैव प्रदक्षिणं एव, भृशं नितरां, अभ्रमयत् परिभ्रमयामास ॥ ४० ॥

वधूर्विवाहानलधूमविक्लबा
निमीलयन्ती क्षणमीक्षणद्वयम् ।
चकार कर्णार्पितयोरयत्नतः
सपत्नशून्यामसिताब्जयोः श्रियम् ॥ ४१ ॥

**वधूरिति** ॥ विवाहानलधूमविक्लबा विवाहार्थं पाणिग्रहणार्थं यः अनलः अग्निः तस्य धूमेन विक्लबा विह्वला पीडिता इत्यर्थः, वधूः नवोढा दमयन्ती, ईक्षणद्वय नयनयुगल, निमीलयन्ती मुकुलयन्ती सती, कर्णार्पितयोः कर्णयोः श्रोत्रयोः अर्पितयोः निवेशितयोः, असिताब्जयोः नीलोत्पलयोः, श्रियं शोभां, क्षण किञ्चित्कालं, अयत्नत· यत्न विनैव, सपत्नशून्यां निस्सपत्नां शत्रुरहितां इति यावत्, चकार विदधे ॥ ४१ ॥

नरेश्वरे सप्तपदीविधित्सया
करेण भैम्याश्चरणं जिघृक्षति ।
निरीक्ष्य साकूततरङ्गितेक्षणं
सखीजनं नम्रमुखी बभूव सा ॥ ४२ ॥

**नरेश्वरे इति** ॥ नरेश्वरे नलमहाराजे, सप्तपदीविधित्सया सप्तानां पदानां समाहारः सप्तपदी विधातु इच्छा विधित्सा सप्तपद्याः विधित्सा तया विवाहाङ्गभूतसप्तपदीनयनाख्यविधिचिकीर्षया, करेण स्वपाणिना, भैम्याः दमयन्त्याः, चरण पाद, जिघृक्षति ग्रहीतुं इच्छति सति, सा दमयन्ती, सखीजन स्ववयस्यासमूह, साकूततरङ्गितेक्षणं साकूत साभिप्राय यथा तथा तरङ्गिते घूर्णिते ईक्षणे नयने यस्य तं तथाभूत निरीक्ष्य अवलोक्य, नम्रमुखी अवनतवदना बभूव ॥ ४२ ॥

ततः कुमारी गुरुणाभ्युदीरिता
[illegible]क्षी ध्रुवमैक्षताम्बरे ।